अष्टाधिकशतांशो य सोत्रनेरङ्गुळं च तत् ।
द्वे अङ्गुले कला नेत्रं गोळकं भाव एव च ॥९४॥
अङ्गुळादष्टभागो य स यव परिकीर्तित ।
षट्कल च परिज्ञेय तालं बिम्बादिकर्मणि ॥९५॥
मुखाङ्गनाभिमेढ्रभान्तालमानान्यथोरयुक् ।
द्विकले च तथा जङ्घे गुल्फं जानुगळं च क्रम् ॥९६॥
त्र्यङ्गुळं त्र्यङ्गुळ ज्ञेयमित्युन्मानमुदाहृतम् ।
जटाधगणा बिम्बाना दीर्घह्रस्ववशेन तु ॥९७॥
चतुष्कळ च त्रिकल मान मानाद्बहि क्षिपेत् ।
त्रिपञ्चसप्तशिखरो मौळिरष्टकलोन्नत ॥९८॥
निर्जटाना ललाटोर्ध्वे मकुट वा सुशोभनम् ।
तालेन ह्रासवृद्धी तु कार्ये त्वत्र व्यपेक्षया ॥९९॥
यथोदितेषु भागेषु एकैकेनाङ्गुळेन तु ।
आस्यनामाल्ललाटार्धं वदनाद्य भजेत्त्रिधा ॥१००॥
ततोऽग्रत कलामान घ्राण स्यात्तिलपुष्पवत् ।
कलार्धेन तु विस्तार सोन्नतिस्त्वङ्गुळद्वये ॥१०१॥
नासाग्रमासनिर्मुक्त गोजीमान चतुर्यवम् ।
तच्चतुर्यवमानेन घ्राणाग्रमान्तरं कृतम् ॥१०२॥
अर्धाङ्गुळं चोत्तरोष्ठमधरोष्ठ तु चाङ्गुळम् ।
गोळक त्रियुक्तं दित सृक्किणी चतुरङ्गुळे ॥१०३॥

कुर्यात्पद्मदलाकारं नेत्रार्धं वृत्ततारकम् ।
तारादैर्घ्यत्रिभागेन त्वाभ्यान्यस्य चाधिका ॥१०६॥
यवेनैकेन सार्धेन ज्योतिस्तत्पञ्चभागिकम् ।
त्रिभागेनापि विहितं तत्पद्मदललोचनं ॥१०७॥
द्विपञ्चयव नेत्रकोशं विस्तारेण यवाधिकम् ।
सार्धांगुलद्वयं दैर्घ्याङ्गुल्ते द्विस्त्ले स्मृते ॥१०८॥
मध्यतो द्वियवे बालचन्द्रतुल्ये क्रमक्षते ।
तदन्तरं ग्लार्धं च तत्कोटी समसूत्रके ॥१०९॥
श्रोत्रे द्व्यङ्गुलविस्तीर्णे आयामेन द्विगोळके ।
द्वियवं कण्ठपरिधि पर्वणी द्वे चतुर्यवे ॥११०॥
मध्य ताभ्यां तथा विद्धि द्रोणी सार्धांगुळा तु वै ।
कलार्धेन तु तच्छिद्रं पाशमानं यथारुचि ॥१११॥
अङ्गुलाद्विकलान्तं तु वैपम्यमपि तत्र तत् ।
अन्तरिछद्रविनिर्मुक्तं तद्विद्धि चतुर्यवम् ॥११२॥
सदलङ्करणोपेतमेवं श्रोत्रद्वयं स्मृतम् ।
चतुष्कळं ललाटन्तु शिखरे द्वे द्विगोळके ॥११३॥
उच्छ्रायात् त्र्यङ्गुले चैव अग्रतोऽङ्गुलविस्तृते ।
केशभूमे समुद्भूत ललाटोपरि संस्थितम् ॥११४॥
कुर्यात्कलार्धमानं तु वक्त्रं चालकमध्यमम् ।
कपोलपरिधिं कुर्यात्कर्णात्कण्ठगतं समम् ॥११५॥
तन्मध्ये वर्तुलौ गण्डौ परिरिछन्नौ पुरोदितैः ।
शिरसः परिणाहं तु वित्त षट्त्रिंशदङ्गुलम् ॥११६॥
श्रोत्रकोटिद्वयाचैव मस्तकस्य यदन्तरम् ।
तत् षोडशाङ्गुलं वित्त वर्तिभ्यां पृष्ठतस्तथा ॥११७॥
मार्धताळं पश्चिमं ललाटात्कुहान्तरम् ।

अष्टाधिकशतांशो य मोक्षतेरङ्गुळ च तत् ।
द्वे अङ्गुळे कला नेत्र गोळक भाव एव च ॥९४॥
अङ्गुळादष्टभागो य स यव परिकीर्तित ।
षट्कल च परिज्ञेय ताल बिम्बादिकर्मणि ॥९५॥
मुखाङ्गनाभिमेढ्रक्ष्मास्तालमानाः ऋथोरुयुक् ।
द्विकले च तथा जङ्घे गुल्फ जानुर्गळ च क्रम् ॥९६॥
त्र्यङ्गुळ त्र्यङ्गुळ ज्ञेयमित्युन्मानमुदाहृतम् ।
जटाधरणा बिम्बाना दीर्घह्रस्ववशेन तु ॥९७॥
चतुष्कळ च निकल मान मानाद्बहि क्षिपेत् ।
त्रिपञ्चसप्तशिखरो मौळिरष्टकलोन्नत ॥९८॥
निर्जटाना ललाटोर्ध्वे मकुट वा सुशोभनम् ।
तालेन ह्रासवृद्धी तु कार्ये त्वत्र व्यपेक्षया ॥९९॥
यथोदितेषु भागेषु एकैकेनाङ्गुळेन तु ।
आस्यनामाललाटार्थं वदनाश भवेत्त्रिधा ॥१००॥
ततोऽग्रत कलामान घ्राण स्यात्तिलपुष्पवत् ।
कलार्धेन तु विस्तार सार्धतिलपुटद्वये ॥१०१॥
नासाग्रग्रामनिर्मुक्त गोनीमान चतुर्यवम् ।
तच्चतुर्यवमानेन घ्राणाग्रेणान्तरीकृतम् ॥१०२॥
अर्धाङ्गुळ चोत्तरोष्ठमधरोष्ठ तु चाङ्गुळम् ।
गोजक चिबुक वित्त सृक्विण्यौ चतुरङ्गुळे ॥१०३॥
आरभ्य नासिकाग्रान्य मानभागसमाश्रिते ।
कुर्यान्नेत्रश्रुतिच्छिद्रे तत्र नेत्रे कलान्तरे ॥१०४॥
कलायामसम द्व्यर्धकलार्धेन तु विस्तृतम् ।
चतुरस्रद्व्याकार क्रियतेनासिक तु तत ॥१०५॥

१ नारि दृति (पा)

कुर्यात्पद्मदलाकारं नेत्रार्धं वृत्ततारकम् ।
तारादैर्घ्यत्रिभागेन त्वायम्यान्यस्य चाधिका ॥१०६॥
यवेनैकेन सार्धेन ज्योतिस्तत्पञ्चभागिकम् ।
त्रिभागेनापि विहितं तत्पद्मदळलोचनं [1] ॥१०७॥
द्विषड्यवं नेत्रकोशं विस्तारेण यवाधिकम् ।
सार्धांगुळद्वयं दैर्घ्याङ्गूलले द्विस्ले स्मृते ॥१०८॥
मध्यतो द्वियवे बालचन्द्रतुल्ये क्रमक्षते ।
तदन्तरं कलार्धं च तत्कोटी समसूत्रके ॥१०९॥
श्रोत्रे त्र्यङ्गुळविस्तीर्णे आयामेन द्विगोळके ।
द्वियवं कण्ठपरिधिं पर्वणी द्वे चतुर्यवे ॥११०॥
मध्यं ताभ्यां तथा विद्धि द्रोणी सार्धांगुळा तु वै ।
कलार्धेन तु तच्छिद्रं पाशमानं यथारुचि ॥१११॥
अङ्गुळाद्विकलान्तं तु वैपम्यमपि तत्र तत् ।
अन्तश्छिद्रविनिर्मुक्तं तद्विज्ञेयं चतुर्यवम् ॥११२॥
सदलङ्करणोपेतमेवं श्रोत्रद्वयं स्मृतम् ।
चतुष्कळं ललाटं तु शिखरे द्वे द्विगोळके ॥११३॥
उच्छ्रायात् त्र्यङ्गुळे चैव अग्रते,ङ्गुळविस्तृते ।
केशभूमे समुद्भूतं ललाटोपरि संस्थितम् ॥११४॥
कुर्यात्कलार्धमानं तु वक्त्रं चालकमत्रयम् ।
कपोलपरिधिं कुर्यात्कर्णात्कण्ठगतं समम् ॥११५॥
तन्मध्ये वर्तुलौ गण्डौ परिश्छिन्नौ पुरोदितैः ।
शिरसः परिणाहं तु विद्धि षट्त्रिंशदङ्गुलम् ॥११६॥
श्रोत्रकोटिद्वयाच्चैव मस्तकस्य यदन्तरम् ।
तत् षोडशाङ्गुळं विद्धि वर्तिभ्यां पृष्ठतस्तथा ॥११७॥
सार्धताळं पश्चिमं च ललाटात्कगुहान्तरम् ।

सत्कम्बुसदृशी ग्रीवा मूलमध्याग्रतो हि सा ॥११८॥
परिधेर्द्वादशकला एकविंशाङ्गुळाग्रतः ।
अष्टादशाङ्गुळा चैव त्र्यंशात् त्र्यंशेन विस्तृता॥११९॥
तन्मूलं विस्तृतौ स्कन्धौ तुङ्गौ वृत्तायतौ समौ ।
षडङ्गुळं तद्बाहुल्यं बाहुमानं तथोच्यते ॥१२०॥
स्कन्धोत्तमाङ्गं त्रिकलं सन्ध्यन्तं षट्कलं स्मृतम् ।
सन्धेर्वै मणिबन्धान्तं मानं नवकलं स्मृतम् ॥१२१॥
मणेर्मध्यमशाखान्तो हस्तः सप्ताङ्गुळो मतः ।
परिज्ञेयं कलाहीनं तन्मानं मध्यमाङ्गुळे ॥१२२॥
तच्चतुर्यवहीनाच्च सनामा तु प्रदेशिनी ।
द्विकला च परिज्ञेया साङ्गुष्ठा तु कनीयसी ॥१२३॥
द्विपर्वो च स्मृतोऽङ्गुष्ठः सर्वाश्चाङ्गुळि विस्तृता ।
सर्वासां मूलपर्यन्ताद्ध्रासयेच्च यवं यवम् ॥१२४॥
अग्रपर्वार्धमानेन कार्या लिङ्गोपमा नखा ।
मानमङ्गुष्ठमूलस्य परिधेश्चतुरङ्गुळम् ॥१२५॥
तच्चतुर्यवहीनं च ज्ञेयं त्रिष्वङ्गुळीषु च ।
न्यूनाङ्गुळैः कला मार्धा प्राग्वद्ध्रासश्च वेष्टनात् ॥१२६॥
अङ्गुष्ठमङ्गुळं चाग्रात्तिर्यग्न्या पञ्चता स्मृता[1] ।
अर्धाङ्गुळाग्रतोन्यूना वित्त मध्यं करक्षतम् ॥१२७॥
न जलक्ष्मो(चलक्षा)चाग्रात्साङ्गुष्ठाद्विकलं करम् ।
ईषन्निम्नतलं चैव लक्ष्मरेखाविभूषितम् ॥१२८॥
शाखामूलावधे पाणौ बाहुल्य द्वे यवैर्गुळम् ।
चतुर्यवाधिकं चैव मणिबन्धावधे स्मृतम् ॥१२९॥
मध्ये करार्धहीनं तु तद्बाहुल्यमुदाहृतम् ।

---

१– तुल्यम्– इति (पा)

मणिबन्धावधेर्बाहुवेष्टनं षट्कलं स्मृतम् ॥१३०॥
सन्धेः सप्तकलं वित्त साङ्गुलं त्र्यवमप्युत ।
हीनमर्धाङ्गुळेनैव मूलाद्वै नवगोळकम् ॥१३१॥
तथैव सन्धेरूर्ध्वं तु विस्तारः प्राग्वदत्र च ।
अत्रापि पूर्ववद्दृष्ट्या कार्यान्तस्था क्षितिः स्वयम् ॥१३२॥
तालं गळावधेस्त्यक्त्वा तन्मानेनान्तरीकृते ।
स्तनद्वयं समं कुर्याद्वाद्वारा च समांसळा ॥१३३॥
निम्नं द्व्यङ्गोळकार्धेन ऊर्ध्वतो रलराङ्ग्युतम् ।
स्तनाभ्यां त्रिकलौ पार्श्वौ त्रियवं स्तनमण्डलम् ॥१३४॥
यवोन्नतं तथाचाप्राद्विस्तृतं तेन चूचुकम् ।
लोचनं त्रियवं सार्धं कक्षमानमुदाहृतम् ॥१३५॥
स्कन्धमानविनिर्मुक्तं पृष्ठमंसावधेः समम् ।
द्रोणीनिकाशसदृशमध्वराशेः समांसळम् ॥१३६॥
कक्षान्तर्वेष्टनं वित्त पञ्चतालं सलोचनम् ।
विनाङ्गुळद्वयेनैव द्वे ताले द्विगुणीकृते ॥१३७॥
यवत्रयसमायुक्ते वित्त तत्कुक्षिवेष्टनम् ।
त्रियवोनं कलामानं विज्ञेयं नाभिमण्डलम् ॥१३८॥
तन्मानं तु त्र्यवोनं तु तन्निम्नत्वं विधीयते ।
परिधिर्नाभिमध्ये तु त्रिताल सत्रिलोचनः ॥१३९॥
षड्गोळकं च तन्मानं परिध्यर्थं कटेः स्मृतम् ।
करिकुम्भोपमौ पीनौ परितः पञ्चगोळकौ ॥१४०॥
स्फिजौ कौपीनराजौ च द्व्यङ्गुळा मूलतः स्मृता ।
परितोऽङ्गुळमानासौ मेढ्रं तु त्रिकळं स्मृतम् ॥१४१॥
चतुर्यवं च तत्कोशं वेष्टनं तु षडङ्गुळम् ।

१— पञ्च-द्व्यमम्- इति-(पा)

द्व्यङ्गुलौ वृषणौ दैर्घ्यान्मूलान्त समविस्तृतौ ॥१४२॥
परितो द्व्यङ्गुल वित्त वायुरन्ध्र सुवर्तुलम् ।
ऊरुमान परिज्ञेय मध्यभूमेर्नवाङ्गुलम् ॥१४३॥
षट्कल मूलदेशाच्च अग्रा त त्रिकल स्मृतम् ।
हीनमेकाङ्गुलेनैव द्विकल जानुमण्डलम् ॥१४४॥
विस्तारेणोन्नतत्वेन चतुर्यवसम तु तत् ।
जङ्घामूले परिज्ञेये वेष्टन नवगोळकम् ॥१४५॥
द्विसप्ताङ्गुळक मध्ये सार्धपञ्चकल तत ।
अत्रापि वेष्टनाद्वित्त तृतीयांशेन विस्तृतिम् ॥१४६॥
मध्यमूलाग्रसानेभ्यो विस्तारमनुगुण्यत ।
भुजाभ्या मध्यदेशस्य तथाङ्गुलिगणस्य च ॥१४७॥
ऊरुयुग्मस्य जङ्घाभ्यामापाद्य द्विपदस्तना ।
सताळभागमान च दैर्घ्यं वै चरण स्मृतम् ॥१४८॥
पार्ष्णी द्विगोळकतले तन्मध्ये साङ्गुळ कले ।
त्रिकल चाग्रतश्चैव बाहुल्येन कलासमम् ॥१४९॥
पञ्चमगुष्ठनिकगाद्वियवोन प्रकीर्तितम् ।
बाहुल्य च कलामान गुल्फदेशाच्च साङ्गुळम् ॥१५०॥
कनीयोङ्गुलिमूलाच्च गुल्फान्त पिण्डिकाङ्गुळम् ।
जङ्घान्तमानदेशाच्च वेष्टन सप्तसैकम् ॥१५१॥
कलाहीन तदैवाग्रपरिणाहो विधीयते ।
चरण विधिना तेन कूर्मपृष्ठ समाप्य च ॥ ? ,२॥
द्व्यङ्गुळेन च तद्दैर्घ्यान्गुल्फस्य च दीर्घता ।
पञ्चाङ्गुळ परिणेय परिविन्नस्य ...न् ॥१५३॥
यवद्वयाधिका वार्या तद्दैर्घ्यात् प्रदेशिनी ।
अङ्गुष्ठायामतुल्याथ ... वै पदमध्यमा ॥१५४॥

मध्याङ्गुळे द्विरष्टांशहीना तदनु या स्थिता ।
तद्वत्तदनुगा या च त्रिपर्वास्तास्तु पूर्ववत् ॥१५५॥
संयुक्ता नखजालेन कूर्मपृष्ठोपमेन च ।
द्विकलं तु यवार्धेन पादतर्जनिवेष्टनम् ॥१५६॥
चतुश्चतुर्यवोनं च तच्छेषाणां प्रकीर्तितम् ।
त्र्यंशेन वेष्टनाद्ज्ञेयं सर्वासां चैव विस्तृतम् ॥१५७॥
सर्वे समासळाः सौम्याः समास्त्ववयवाः शुभाः ।
दशनावलिमाद्यस्थे दन्ते सप्तयवोन्नते ॥१५८॥
यवद्वयोन्नतं मानं मध्यदन्तचतुष्टये ।
तत्पक्षगानां सर्वेषां मानं वित्त चतुर्यवम् ॥१५९॥
त्रियवं द्विजविस्तारमग्रान्मूलाद्यवद्वयम् ।
तत्सार्धं मध्यदेशाच्च सर्वे दन्ता निरन्तराः ॥१६०॥
लोमप्रदक्षिणावर्तमयुग्मं मोत्थितं शुभम् ।
सुनिश्चितं हितं चैतन्मानमव्यभिचारि यत् ॥१६१॥
मनोहारित्वमेकत्र रूपलावण्यभूषितम् ।
सर्वदा चानयोर्वित्त अन्योन्यत्वेन संस्थितिः ॥१६२॥
सत्सौन्दर्यं तु मानस्य क्वचिदाक्रम्य वर्तते ।
लावण्यस्य क्वचिन्मानं समाच्छाद्यावतिष्ठते ॥१६३॥
यथाभिरूपवान् लोके दरिद्रोऽप्येति मान्यताम् ।
विरूपोऽप्यतिवित्ताढ्यो चारूपो नैव निर्धनः ॥१६४॥
एवं द्वयोज्झितं बिम्बमनादेयत्वमेति च ।
आदेयमेकयुक्तं च नित्यं यस्मान्मुनीश्वराः ॥१६५॥
सम्यङ्माने च सौन्दर्ये भक्तानुग्रहकाम्यया ।
मन्त्रसन्निधिशक्तिर्वै सम्यगाश्रयतिष्ठते ॥१६६॥
सा मण्यवनतिपत्रस्य बिम्बे दृगोचरस्थिते ।

आमूर्ध्याह्लादयत्याशु ज्ञात्वैवं यत्नमाचरेत् ॥१६७॥
मानोन्मानप्रमाणानामथ सौन्दर्यसिद्धये ।
ऋजोः सुसमपादस्य त्र्यंगुळं चरणान्तरम् ॥१६८॥
तद्वै विषमपादस्य अग्रात्ताळसमं स्मृतम् ।
तत्पार्ष्णिद्वयमध्यात्तु परिज्ञेयं द्विगोळकम् ॥१६९॥
स्थित्यर्थं ब्रह्मनाड्या वै तथा मार्गद्वयस्य च ।
सूत्रेण सुसमे कुर्याद्देहोत्थे दक्षिणोत्तरे ॥१७०॥
समपादस्य बिम्बस्य ललाटान्मेढ्रमस्तकम् ।
प्रसार्य सूत्रमाच्छाद्य तेन नाभिहृदन्तरम् ॥१७१॥
घ्राणाग्रमळकानां च सिद्धिर्यस्तिलकोर्ध्वगः ।
एवं विषमपादस्य दक्षांगुष्ठाग्रगं नयेत् ॥१७२॥
गात्रसाम्यं समापाद्य क्षेत्रात् क्षेत्रगतेन च ।
सूत्रेण सर्वबिम्बानां वैषम्यविनिवृत्तये ॥१७३॥
चतुस्त्रिद्व्यश्रिपरितः परिशुद्धः यतः शुभा ।
अशुभा परिशुद्धा तु बिम्बोत्थावयवी स्थितिः ॥१७४॥
ललाटमश्ववक्त्रस्य विस्ताराद्वादशांगुळम् ।
अष्टलोचनमायामादमतश्चतुरंगुळम् ॥१७५॥
कलार्धसुषिरे घ्राणरन्ध्रे भागान्तरीकृते ।
अष्टांगुळे तु हनुके सृक्विण्यौ द्वेऽथ तत्समे ॥१७६॥
मध्यतश्श्रोत्रशुक्ती द्वे त्र्यंगुळे द्विकलोन्नते ।
त्र्यंगुळं घ्राणवंशं तु तदूर्ध्वं द्विकलं स्मृतम् ॥१७७॥
बिलं वक्त्रविकासं च द्वियवं चायतं क्रमात् ।
तमेव हि यवांशेन हन्वन्तं तनुतां नयेत् ॥१७८॥
घ्राणवंशस्य पक्षौ द्वौ मध्यानिशौ च सहतौ ।
यवद्वयेन सार्धेन दृग्घ्राणाभ्यां तु चान्तरे ॥१७९॥

अथो दळं तु दृग्द्रोणेर्यवमानेन संश्रितम् ।
ललाटं साळकं प्रागवद्दृङ्मध्यं साङ्गुला कला ॥१८०॥
नृसिंहस्य मुखे वित्त परितश्चाष्टलोचनम् ।
ततोष्ठखण्डदेशाच्च कुर्यात्कर्णद्वयोत्थितम् ॥१८१॥
तत्कर्णद्वयमानेन ललाटान्तं नयेत्सुन ।
प्रमाणात्प्राक्प्रणीताच्च सरभाघ्राणलक्षण ॥१८२॥
प्रफुल्लविक्रमच्छिद्रं घ्राणवशान्वितं भवेत् ।
तच्छिद्रे पूर्वमानाच्चाप्यस्य वै त्रियवाधिकम् ॥१८३॥
सगोळमुत्तराङ्गेषु सकलांश च लोचनम् ।
अधरोष्ठ परिज्ञेयं सचतुर्यवमङ्गुळम् ॥१८४॥
सार्धं चतुष्कलं वक्त्रं शेषायामो हनो स्मृत ।
तद्विकास परिज्ञेय नेत्रमानं यवाधिकम् ॥१८५॥
अग्रतो ह्रासमायाति सृक्विण्यन्तं हि चाङ्गुळम् ।
तार्यवृत्तं तदर्धेन नेत्रयुग्म सविस्मयम् ॥१८६॥
पूर्ववद्विस्तृतं श्रोत्रं कलार्धेन तदुन्नते ।
तुल्या चेन्द्रकलायुग्मयोगस्य भ्रूक्षिगोळका ॥१८७॥
तन्मध्य तु कलामान शङ्खावर्तोपम महत् ।
भागमान समावृत्तं कार्यं तच्छिरसि स्फुटम् ॥१८८॥
दैर्घ्येण सार्धताल च क्ष्माधरस्यानन स्मृतम् ।
विस्तारेण ललाटाच्च तन्मानं द्व्यङ्गुळोज्झितम् ॥१८९॥
सौम्यरूपस्य च विभो प्रोथतस्य फलोज्झितम् ।
तच्चतुर्थांशमानेन पोत्रदेशस्य विस्तृति ॥१९०॥
तस्योपरिष्टाद्दाढ्यस्य तत्सम चाङ्गुळ त्वथ ।
हनुद्वयस्य वै मान सार्धं सप्ताङ्गुळ स्मृतम् ॥१९१॥
शेषमाननरन्ध्र तु सृक्विणीभ्यां यदन्तरम् ।

तद्विकामश्च सार्धेन स्वार्धेनाग्रदेशत ॥१९२॥
स पुवागुळमानेन विज्ञेय सृक्किणीद्वयात् ।
घ्राणरन्ध्रश्च चक्रोक्ते दृष्टे त्वर्धकलोन्नते ॥१९३॥
नासान्तश यथापूर्व कवळीनाडिपृष्ठवत् ।
श्रोत्रे वाजिमुखोक्के तु को(कि)टे सप्तकलान्तरे ॥१९४॥
तत्तुल्ये लोचने किं तु प्रान्तनीक्ष्णे यवोज्झिते ।
एतेपा विहिता ग्रीवा ह्यङ्गुळद्वितयेन तु ॥१९५॥
ग्रन्थेस्वदेशात्सयुक्ता सौम्यमूर्त्युदिता च या ।
विनोच्छ्रायेण नूट्टरे यस्य गात्रस्य या प्रभा ॥१९६॥
सा सा सर्वेष्टनाद्यासास्वलार्धेनाधिका भवेत् ।
वक्ष कर्युदगसाम्यिचलामानाधिकानि च ॥१९७॥
तथैव नखपत्राणि देहश्चास्य मम,सत ।
सम्पूर्णो दक्षिणावर्तोमभिश्चानिरुचि रौ ॥१९८॥
त्रिचतु पञ्चवक्त्रस्य निनेवोर्ध्वमुखेन तु ।
दक्षिणोत्तरवक्त्राभ्या ह्वाम कुर्याद्विगोळकम ॥१९९॥
विकाम सिंहवक्त्रोक्त उदग्वक्त्रस्य तत्र च ।
समो ह्रक्षनिवेशस्तु चतुर्णो मोक्षसिद्धये ॥२००॥
भागेभर्भागकैवल्यप्रातमेऽर्धाङ्गुळेन च ।
कुर्या सव्यापसव्याभ्यामधो ह्रस्वनिवेशनम् ॥२०१॥
सहपूर्वनिनेनैव सम्यक्प्रत्यङ्मुखस्य च ।
निष्का(ष्ठा)मायामविस्तारप्रागाग्रमुखनिम्नथ ॥२०२॥
ईपन्निर्य हृक्षिनिम्नमत्यङ्मुख दक्षिण शुभम् ।
तद्वच प्रोक्तदृक्तस्वमुत्तर सर्वसिद्धिदम् ॥२०३॥
सरार्यसूना नूत तन्नत्रस्य च शक्तिधि ।
अतोऽन्यथा समाश्रित्य शान्तिमन्ने च मन्त्रगद् ॥२०४॥
नित्य म गन्नि्धानाच नूतयेनाद्धरात्य ।

आदर्शनात्पलायन्ते आविशन्ति च दर्शनम् ॥२०५॥
आदाय शिरसा मन्त्रिसमाज्ञां सम्प्रयान्ति ते ।
अतः समाचरेद्यत्नेन स्याद्दिम्बसन्निधि ॥२०६॥
न हि तत्सन्निधानाद्धे कश्चिदारभते शुभम् ।
वराहदंष्ट्रं सिंहाक्षं तथा चिपिटनासिकम् ॥२०७॥
विधेयं पश्चिमं वक्त्रं पञ्चवक्त्रस्य वै विभो ।
अस्याधरोत्तराभ्यामप्योष्ठाभ्यां समता भवेत् ॥२०८॥
विभिन्नताङ्गुलार्धेन ताभ्यां तन्मध्यगा स्फुटा ।
कार्या दशनपाळी वै मूलमध्याग्रतः समा ॥२०९॥
कलार्धेनोल्बणं वृत्तं तद्गण्डद्वितयं ततः ।
द्विकलं चाग्रतः श्मश्रु कला चार्धकला क्रमात् ॥२१०॥
सम्बन्धवेणि पूर्वोक्तमानेन शुभकृद्भवेत् ।
सिंहसूकरवन्मुख्यवक्त्राणां सौम्यतां नयेत् ॥२११॥
प्रमाणं दृग्गतालक्षाद्यवहारमयात्तु वै ।
विकासश्चादिवक्त्रोक्तः सौम्यरूपस्य भूभृत ॥२१२॥
तदाद्योक्तस्तु नृहरे भागुक्तो य समाचरेत् ।
तथा वक्त्राङ्गभाविते विभो शर्वादिवरस्य च ॥२१३॥
हारनूपुरवन्नासकटकाङ्गदभूषिता ।
माल्योपवीतकेयूरमकुटाद्युपशोभिता ॥२१४॥
प्रतिमा मन्त्रमूर्तीनां कृत्वा भवति सिद्धिदा ।
यत्पुरा पञ्चधा प्रोक्तं वाहनं प्राणदैवतम् ॥२१५॥
तस्य बिम्बममुख्येन तालेन मुखमण्डलम् ।
त्र्यङ्गुळं तु ललाटोक्तं नटात्रभो द्विलोचन ।२१६॥
द्व्यङ्गुळेनोन्नतं कर्णं उरः पञ्चकलं स्मृतम् ।
अष्टाङ्गुळं तदुदरं कटिः पञ्चाङ्गुळोन्नता ॥२१७॥

नवाङ्गुळोन्नतावूरू जानुनी द्व्यङ्गुळे स्मृते ।
अष्टाङ्गुळोच्छ्रिते जङ्घे द्व्यङ्गुळे पदपिण्डके ॥२१८॥
शममेक कलाहीन तद्ग्रीवायाश्च वेष्टनम् ।
बिम्बतुल्या परिज्ञेया सर्वदा साङ्गविस्तृति ॥२१९॥
तद्विभागाधिक वित्त वेष्टन ह्युदरस्य च ।
परिधि कटिदेशस्य चतुर्नेत्राधिकस्तु वै ॥२२०॥
बिम्बोकसदृश वित्त तदूर्वोर्मूलवेष्टनम् ।
तदेव जङ्घामध्यस्य जङ्घान्तस्य तदेव हि ॥२२१॥
पाद पञ्चकलायाम चतुरङ्गुळविस्तृतम् ।
त्र्यङ्गुळ पार्ष्णिदेशाच्च अङ्गुष्ठोर्धकलासम ॥२२२॥
विज्ञेया अङ्घ्रिदेशाच्च यवेनाङ्गुळय क्रमात् ।
नाभिरन्ध्र सुविस्तीर्णं द्व्यर्धलोचनविस्तृतम् ॥२२३॥
मध्यमाङ्गुळिपर्यन्त मणिबन्धान्नवाङ्गुळम् ।
तिस्रल पाणिविस्तार तन्नखा निशितोन्नता ॥२२४॥
तद्बाहुमस्तक वित्त उच्छ्रायेण द्विलोचनम् ।
भुजोपभुजयुग्म यत्तत् द्वितालसम स्मृतम् ॥२२५॥
कलार्धेनाधिक बिम्बनाह्योस्तद्बाहुवेष्टनम् ।
बिम्बोष्ठा सद्विधीर्घैव स्तनमूलेचनोल्बणा ॥२२६॥
वृत्तवैपुल्यमानेन लोचने पद्मपत्रवत् ।
भ्रुयुग्म नरसिंहोऽथ घ्राणाग्र शुकचञ्चुवत् ॥२२७॥
कलार्धमान दीर्घं च तद्वश गजपृष्ठवत् ।
सायामदीर्घं तत्पक्षयुगळ कुक्षिदेशगम् ॥२२८॥
तदेव दैर्घ्यादर्धेन विस्तृत हंसपक्षवत् ।
स्वपक्षमानाद्द्विगुण तत्पुच्छ शस्त्रधारवत् ॥२२९॥
तत्पक्षमितमायाम मम ततयनाचितम् ।

सर्वेषां वित्त सामान्यं विशेषाख्यमथोच्यते ॥२३०॥
ऊरुद्वयान्नयेद्भासमङ्गुळानां त्रयं तथा।
जङ्घाकाण्डोच्छ्रिते कुर्याज्जङ्घाभ्यां चात्र वेष्टनम् ॥२३१॥
बिम्बाख्यं मणिबन्धस्य सममूलान् महामते।
जालदेशाच्चार्धेन सह चार्धाङ्गुळेन तु ॥२३२॥
पादे जालं परिज्ञेयं विस्तारेण षडङ्गुळम्।
शेषं सत्योदितं सर्वं सर्वेषां वित्त सर्वदा ॥२३३॥
किं तु पादोज्झितौ पक्षौ दैर्घ्यात्तद्दळविस्तृतौ।
एषां चोड्डीयमानानां स्वायामा पक्षविस्तृतिः ॥२३४॥
पश्चानाच परिज्ञेया स्थितानामर्धलक्षणा।
एतदादाय मानं तु पुच्छभूपक्षवर्जितम् ॥२३५॥
विद्धि वामनरूपस्य लक्षणं किं तु लाङ्गलिन्।
ललाटनासावक्त्रेभ्यः समादायाङ्गुळत्रयम् ॥२३६॥
मस्तकस्योपरिष्टात्तु जटाबन्धं प्रकल्पयेत्।
जटावसानमायामं यथा स्यात्पञ्चतालकम् ॥२३७॥
ततस्तु कर्मबिम्बेषु विशेषः कथ्यतेऽधुना।
कर्मार्चा चोत्सवार्चा च बल्यर्चा तीर्थकौतुकम् ॥२३८॥
निमित्तस्नपनार्चा च शयनार्चेति षड्विधा।
अर्चाः कार्यास्त्विमा विप्रा! बहुबेरविधानके ॥२३९॥
एकबेरे तु कर्मार्चां विना पञ्च प्रकल्पयेत्।
एतैः सर्वैरङ्गबिम्बैर्युक्तं चेन्मूलकौतुकम् ॥२४०॥
उत्तमं स्यात्त्रिभिर्युक्तं मध्यमं परिकीर्तितम्।
एकेन युक्तमधमं तत्तन्मानमिहोच्यते ॥२४१॥
मूलबिम्बसमुच्छ्रायं द्विधा वापि त्रिधापि वा।
चतुर्धा वा सविभज्य एकभागेन कल्पयेत् ॥२४२॥

उत्सवार्चां तदुच्छ्राय द्विधा वापि त्रिधापि वा ।
चतुर्धा वा विभज्यैकभागेन परिकल्पयेत् ॥२४३॥
कर्मार्चादीनि बिम्बानि पञ्चापि द्विजपुङ्गवा ! ।
बिम्बषट्कं च देवीभ्यां सहितं परिकल्पयेत् ॥२४४॥
अथ वा चौत्सवं बिम्बं तथा शयनकौतुकम् ।
श्रीपुष्टिसहितं कार्यं मूलबिम्बे द्विजोत्तमा ! ॥२४५॥
स्थिते वा वाहनारूढे समासीनेपि वा द्विजा ! ।
कर्मबिम्बादिषट्कं च तथैव स्यात् स्थितं तु वा ॥२४६॥
मूलबिम्बे शयाने तु कर्मबिम्बादयो द्विजा ! ।
स्थितावपि समासीना विधातव्या मुनीश्वरा ! ॥२४७॥
नित्योत्सवार्थबिम्बं तु सर्वत्रैव स्थितं भवेत् ।

मुनयः ।

कैर्द्रव्यैर्मुनिशार्दूल ! बेरैकत्वबहुत्वकम् ॥२४८॥
ज्ञातव्यं तदशेषेण वदस्व वदतां वर ! ।

नारदः ।

शिलया मणिना वापि लोहैर्वापि कृता तु या ॥२४९॥
नित्यादिमङ्गलस्नानविषया रहिता सदा ।
कर्मार्चयापि देवीभिः स्थितात्यासीनतां गता ॥२५०॥
स्नाप्यते केवलं मूर्तिरन्यैर तु नित्यं तत् ।
मृद्दारुजं तु यद्बिम्बं कर्मार्चादिसमन्वितम् ॥२५१॥
नित्यादिस्नपनाद्यर्थं शक्तिभिः सहितं न वा ।
मणिवज्रादिशैलं च निमित्तस्नपनक्षमम् ॥२५२॥
सदा तु नित्यस्नानार्थं कर्मार्चासहितं तु यत् ।
मृद्बिम्बं तु लक्ष्म्यादिसहितं रहितं तु वा ॥२५३॥
नित्यनैमित्तिकाद्युक्तमङ्गलस्नपनक्षमम् ।

लक्ष्म्यादिभिः समोपेतं यद्विम्बं शक्तिभिः सदा ॥२५४॥
तदेतत्त्रिविधं वित्त बहुबेरं मुनीश्वराः ।
यत्तु चित्रमयं बिम्बं भित्तिकाष्ठाम्बराश्रयम् ॥२५५॥
कर्मबिम्बसमोपेतं नित्यादिस्नानकर्मणि ।
यच्चापि मृण्मयं बिम्बं त्रिविधं चापि चित्रजम् ॥२५६॥
नित्यनैमित्तिकस्नाने दर्पणादिसमन्वितम् ।
कर्मबिम्बान्वये योग्यं विभवेच्छानुसारतः ॥२५७॥
एतच्चतुर्विधं वित्त बहुबेरं विशेषकम् ।
बहुबेरं यथायोगं स्थितमासीनमेव वा ॥२५८॥
शयानं यानगं वापि भवेदिच्छानुरूपतः ।
बहुबेरादिभेदास्तु पञ्चधा परिकीर्तिताः ॥२५९॥
अन्यानि कर्मबिम्बानि यात्राबिम्बपुरस्सरम् ।
तत्तत्कर्मविशेषार्थं बहुबेरैकबेरयोः ॥२६०॥
द्वयोश्च कल्पनीयानि विभवस्यानुरूपतः ।
इत्युक्तं लेशतो बिम्बलक्ष्म पीठमथोच्यते ॥२६१॥
बिम्बानामुपविष्टानां चतुरश्रं तु तद्भवेत् ।
चतुरश्रायतं चैव प्रोत्थितानां सदैव हि ॥२६२॥
वृत्तवृत्तायतत्वेन शयनयो रूपमन्यथा ।
यागुळैः परमाणुत्थैरारभ्य क्रमशस्तु वा ॥२६३॥
धत्तेर्वा तु समायामद्वारान्तं मन्दिरोत्थितात् ।
तन्मानेन तु पीठस्य दैर्घ्यमर्धेन विस्तृतिः ॥२६४॥
द्वारोर्ध्वाच्च त्रिरन्तानि एकपूर्वाणि वै पुरा ।
सन्त्यज्य द्वादशांशाद्वै अथ पीठोन्नतिस्त्रिभिः ॥२६५॥
शेषेणाष्टांशमयेन प्रतिमा चोत्थिता भवेत् ।
अथ वा वाहनान्ता न्यूना वा मध्यमोत्तमा ॥२६६॥

चतुर्भिर्द्वादशांशैस्तदुपविष्टस्य चोन्नति ।
विहिता चास्य सर्वत्र प्रतिमार्धेन विस्तृति ॥२६७॥
तत्यशकविलुमा वा चतुर्थांशोज्झिताथ वा ।
परिवारवशेनैव चातुरात्म्यस्य वै पुन ॥२६८॥
अलुप्तांश च विहितपीठायाम च सर्वदिक् ।
चतुर्दिग्द्वगतस्यैव एकदिग्द्वगतस्य च ॥२६९॥
तदेव दैर्घ्यं द्विगुण लाञ्छनैरावृतस्य च ।
सार्धं चानावृतस्यैव तद्वाहुल्य पुरोदितम् ॥२७०॥
चतुष्कमेकपीठाना केवल लक्ष्मवर्जितम् ।
एकैक लक्ष्मभेदेन तत्सङ्ख्य विद्धि वै पुन ॥२७१॥
अनन्तासनमाद्य च द्वितीय पक्षमन्दिरम् ।
कमलाङ्क तृतीय तु चतुर्थं चक्रभूषितम् ॥२७२॥
एव हि सर्वसामान्य पीठाना हि द्विरष्टकम् ।
भेदभिन्न समासेन पुनरेव निबोधत ॥२७३॥
दिक्षु लक्ष्माणि पीठाना विद्धि कण्ठगतानि च ।
अन्योन्यसन्निवेशाच्च तेषा बह्वात्मना पुन ॥२७४॥
चक्राम्बुजाभ्या तन्मध्याभ्या लुप्ताभ्यामथ तत्स्थिते ।
ताभ्याम योन्ययोगाच्च दिक्ष्वनन्तखगाश्रयात् ॥२७५॥
द्विद्व्यात्मना द्व्यात्मना वा बहुत्वमवधार्यताम् ।
पद्मेनोर्ध्वगतेनैव द्वय चक्रेण तद्वहि ॥२७६॥
एव ह्यधोगतेनैव परिज्ञेय द्वय द्वयम् ।
उपरिष्टात्तु पद्माभ्यामधश्चक्र द्वय द्वयम् ॥२७७॥
द्वितयव्यत्ययाच्चान्यत्परिज्ञेय मुनीश्वरा ।
अन्तर्गते स्थितिवशाच्चक्रपद्मद्वयस्य च ॥२७८॥
व्यत्ययादनयोर्विद्ध ऊर्ध्वभागाच्चतुष्टयम् ।

अधोभागादेवमेव चतुष्कमपरं तु वै ॥२७९॥
पीठानामष्टकमिदमधस्तादूर्ध्वतस्तु वा ।
शुक्तमेकेन वै कुर्याच्चक्रेण कमलेन वा ॥२८०
चक्राकारास्तु विहिता ह्येकभ्रमसमाश्रिता ।
बह्वोपि तलास्तद्वदीपद्मे कर्णिकान्विता ॥२८१॥
इति लाञ्छनसञ्चारो बहुधा तन्मयोदितम् ।
यस्मिन् प्रकृतिगते तु पीठे तदधुनोच्यते ॥२७२॥
कृत्वा द्विर्दशधा पीठं पुरायामात्समे पदे ।
एकेन चरणं जघाकलशौ च त्रिभिस्त्रिभिः ॥२८३॥
कण्ठवीथीमथैकेन षड्भिः कण्ठं तदूर्ध्वतः ।
भागेन कण्ठसूत्रं तु शुक्तिकाशत्रयेण तु ॥२८४॥
उष्णीषं च तदूर्ध्वे तु कुर्याद्दशद्वयेन वै ।
निर्गमं स्वदलेनैव विहितश्चरणस्य तु ॥२८५॥
चतुर्दिक्षु महात्मान ! क्षेत्रतो ह्यधिकं स्मृतं ।
सर्ववृत्तं घटं कुर्यात्पल्लवैर्वारकैर्युतम् ॥२८६॥
परितोंशद्वयेनैव कर्णपीठं प्रवेशयेत ।
अन्तः प्रवेशमेकेन वीथ्यंशेन गळस्य च ॥२८७॥
कुर्याद्गळप्रवेशास्य समा सूत्रस्य निःसृतिम् ।
शुक्तेरध कण्ठसूत्रभागात्पादेन निर्मितम् ॥२८८॥
वदनान्त समासेन शक्ते सङ्कोचमाचरेत् ।
उष्णीषपटजवानामाश्रिसाम्य यथास्थितम् ॥२८९॥
पटवद्रूपयेच्छुक्तिमरकैर्वाञ्नपल्लवै ।
तत्रोपरिष्टात्परिधिं चतुरशकसमितम् ॥२९०॥
सन्त्यज्य निखनेद्द्रोणीमशनिम्नां समन्ततः ।
विस्तृतेर्मध्यभागेथ स्वत्र्यंशेन च निर्गमम् ॥२९१॥

तन्मान चतुरश्र तु पीठक्षेत्राद्विनिर्गतम् ।
तचाग्रतस्त्रिधा कृत्वा पक्षभागौ क्षय नयेत् ॥१९२॥
अनुपादेन चामूलात्सम्यक् लाङ्गलवक्रवत् ।
अग्रतो मूलदेशाच कृत्वादौ वै त्रिधा त्रिधा ॥२९३॥
भूयस्त्रिखनेन्मध्याज्जल याति यथा द्रुतम् ।
सूकराननतुल्य तु भवत्येव मुनीश्वरा ! ॥२९४॥
कुर्याद्वै शङ्खसदृश मकरास्योपम तु वा ।
जलनिर्गममेतद्वै पीठेपूदितलक्षणम् ॥२९५॥
न कुर्यात्कर्मबिम्बानामाश्रमादिमितात्मनाम् ।
चित्रमृत्काष्ठजाना तु चलाना तु विशेषत ॥२९६॥
तथैव चतुरश्रस्य चतुर्मूर्तिगतस्य च ।
प्रणालमग्रग मूर्तेर्यत सासिद्धिहानिकृत् ॥२९७॥
प्रयोजन विना का चित् न क्षतिस्तस्य तद्विना ।
सामान्यस्य तु वै यस्मादाधारस्य विशेषत ॥२९८॥
सप्रणाळ भवेत्पीठमासन च प्रणाळकम् ।
भूरि नीरादिना स्नान यत्र यच्छति साधक ॥२९९॥
प्रत्यह तद्विना तत्र प्रत्यवायो भवेत् स्फुटम् ।
एवमेव बृहद्बिम्ब भूषिताना विधीयते ॥३००॥
धातुशैलोत्थिताना च निमित्तस्नपनार्थत ।
भद्रासनगते कर्मबिम्बे तस्य समाचरेत् ॥३०१॥
सतत च यथालाभ दधिक्षीरघृतादिना ।
तोयेन तन्नयेत्तस्माद्भूमाग वा प्रतिग्रहम् ॥३०२॥
यथा नाक्रम्यते पादै जन्तुभिस्तन्महर्षिदम् ।
अत प्रणाळ्य विहित निषिद्धमत एव हि ॥३०३॥
जन्मान्त वा जगत्यन्त वैरवान्त गळान्तरम् ।

पद्मिमधन्तलं पञ्चभेदं सर्वेषु धामसु ॥२०४॥
तत्संस्थापनकाले तु देवानां दिग्द्वये हितम् ।
प्राक्प्रत्यगाननानां च तदुदग्दिग्गतं शुभम् ॥२०५॥
उदग्दक्षिणवक्त्राणां प्राग्भागे विहितं सदा ।
तत्पुनर्भद्रपीठीयदेवाद्वामेऽर्थसिद्धिकृत् ॥२०६॥
सदेवाराधकानां तु विलोमाद्विपरीतदम् ।
इत्येवं पीठलक्ष्मापि समासात्कथितं मया ॥२०७॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्

प्रतिमादिलक्षणं नाम

सप्तदशोऽध्यायः ।

अथाष्टादशोऽध्यायः ।

अतः परं प्रवक्ष्यामि मन्त्रबिम्बनिवेशनम् ।
भोगेप्सूनां च वर्णानां साम्प्रतं यदभीष्टदम् ॥१॥
कैवल्यदं तथा चैव चातुराश्रम्यसेविनाम् ।
यज्ञकर्मरतानां च सहायं च फलेप्सु तत् ॥२॥
प्राग्वद्देवगृहस्याग्रे दिग्भागे सति मण्टपम् ।
चतुरश्रं चतुर्द्वारं दर्भमालान्तर्गकृतम् ॥३॥
अन्यत्र तदलाभे तु यथाभिमतदिङ्मुखम् ।
चतुर्दशकरादेव द्वात्रिंशत्करावधि ॥४॥
पद्करान्तं पुरलाभाद्बिम्बमानव्यपेक्षया ।
कार्या मध्ये स्थली तेषां द्विमात्रोच्चसमोष्टभिः ॥५॥
समन्तभद्रा मुख्यना विना पञ्चैपमादिभिः ।

तालोन्नते समारभ्य सामान्येस्मिन् हि कर्मणि ॥६॥
उन्नतागुळवृद्ध्यातु नीता तद्भासता क्रमात् ।
द्वित्रिरष्टाशकैर्मध्ये सर्वासा मण्डल भवेत् ॥७॥
चतुरश्र चतुर्द्वार चक्राबुरुहभूषितम् ।
दक्षिणे शयन सौम्ये कुण्डमस्मेस्तु पूर्ववत् ॥८॥
समेखल द्विहस्त तु चक्रपद्माङ्कित शुभम् ।
तदधश्चतुरश्र प्राग्दामसेखलिकान्वितम् ॥९॥
अथ दक्षिणदिग्भागे कुर्याद्वै चक्रचिह्नितम् ।
वर्तुळ पश्चिमे सौम्ये कमलाङ्क मनोहरम् ॥१०॥
शङ्खाङ्क सर्वकोणेषु मानमेषा यथोर्ध्वगे ।
सर्वे दशान्तहस्ताना चतुर्णामेकमेखला ॥११॥
मण्टपाना तु किं त्वत्र ऊर्ध्वग सर्वमेखलम् ।
अतोधस्स्थिता सर्वे एककुण्डास्तु मण्टपा ॥१२॥
तेषा समेखल चाद्य द्वाविशत्यगुळैर्भवेत् ।
ह्रासादगुळयुग्मस्य यावद्वै षोडशागुळम् ॥१३॥
स्यात् पञ्चकरे गृहे कुण्ड कार्या वा मेखलाधिका ।
अष्टहस्तोच्छ्रित पूर्वमथो नैकरवर्धिता ॥१४॥
न ह्रासष्षट्कारानाना न्यूनानामुच्छ्रितेर्भवेत् ।
त्रयोदशकरादीना चतुर्णा पालयेत्तत ॥१५॥
अष्टक चागुळाना तु सप्तपञ्चचतु क्रमात् ।
एव स्नानगृहाणा तु विस्तारश्चोन्नतै सह ॥१६॥
किं तु वै वालुकापीठे मध्यतश्चोपशोभिता ।
द्विचतुर्भि द्विहस्तादीविस्तृता सार्धदुन्नता ॥१७॥
स्नानीया अमरोहाद्वै दिक्त्रयेभिमते शुभे ।
अर्धमानसम सुस्थापुपीठनयनान्वितम् ॥१८॥

द्वारदानभवनं कुर्यान्माङ्गल्यकलशैः सह ।
सर्वेषामपि भूभागे कोणस्तम्भैर्विभूषितम् ॥१९॥
सुनेत्रैर्वेष्टितं कुर्याच्चकार्थे पूर्वमग्रतः ।
सुस्थितं दृढपादं च स्नानाम्भोग्रहणक्षमम् ॥२०॥
अर्धेन वालुकापीठं दैर्घ्यमायकरेण तु ।
वर्धितं चार्धहस्तेन ह्रासितं चतरङ्गुले ॥२१॥
स्वदैर्घ्यादर्धविस्तीर्णं कृत्वैव समणालकम् ।
तेन तद्वालुकापीठं भूपयेन्मध्यगेन तु ॥२२॥
यागागारस्य वै दिक्षु द्वारार्थं तत्र चान्तरे ।
शमार्धवृद्धियोगेन ह्रासोऽन्यत्र कलादिकः ॥२३॥
तोरणानि वहि कुर्यात् दृढे काष्ठे सुपूजिते ।
पञ्चहस्तानि चार्धेन वर्धितानि करेण तु ॥२४॥
न ह्रासमाचरत्तेषामन्यत्र करणे सति ।
न समात्पञ्चहस्तानामूर्ते भूमौ प्रवेशयेत् ॥२५॥
शमार्धं वर्धितानां च द्वे द्वे सवर्धयेत्कले ।
दैर्घ्यात्प्रवेशशिष्टात्तु त्रिभागेन तदन्तरम् ॥२६॥
सर्वे चक्रध्वजाः कार्या वस्त्रस्रग्मञ्जरीयुताः ।
सुधाद्यैर्वर्णकैः पीतैश्चन्दनाद्यैस्तु लेपिताः ॥२७॥
भिन्नाङ्गमेतदखिलं यथैकस्मिन् हि युज्यते ।
कर्म यागगृहे यद्वद्विभूतेर्वाधनैर्विना ॥२८॥
पञ्चत्रिंशत्करं क्षेत्रं चतुर्यागेन विस्तृतम् ।
तन्मध्ये तु चतुर्हस्तं त्यागार्थं स्थलसत्तमम् ॥२९॥
स्थलानां व्यवधानं तु कुर्याद्वे ताळसम्मितम् ।
एकायामेन वै कुर्यात् द्विहस्तान्तं स्थलाङ्गणम् ॥३०॥
क्रमेणाष्टाङ्गुळान्मानात् द्व्यङ्गुळं द्व्यङ्गुळं विना ।

सलाना सङ्कटाना च व्यवधान द्विगोळकम् ॥३१॥
एवमेव समुच्छ्राय सर्वेषा परिकीर्तित ।
परितो विहित वीधे मानमत्र सपीठजम् ॥३२॥
एव वा सङ्कटे कुर्यादाद्योक्तान्मण्टपद्वयात ।
मध्यमण्डलपीठ तु तस्य दक्षिणदिग्भवेत् ॥३३॥
समीपे शयनस्थान कुम्भाना स्थापनायनम् ।
एव हि वामनिर्दृष्टे भोगाना मन्त्रतर्पणम् ॥३४॥
ऋग्यजुस्सामपूर्वाणा श्रुतीना हवन परे ।
दग्दान शयनस्थान ह्यन्यस्मिन् शयने हितम् ॥३५॥
प्रासादस्याष्टदिङ्मूर्तिपानामेव यथोदितम् ।
स्थण्डिलेष्वथ कुण्डेपु तादर्थ्येनाथ वा स्वयम् ॥३६॥
स्वकुण्डे हवन कुर्याच्चतुर्वेदमये परे ।
समस्तमूर्तिपोय वा स्वयमेव समाचरेत् ॥३७॥
सामग्रीविरहाद्योग्यमूर्तिपानामभावत ।
एव त्वभिनव कृत्वा यागार्थं मण्टप द्विजा ! ॥३८॥
पूर्वोदितैरलङ्कारैरलकृत्य पृथग्विधै ।
सितरक्तादिभेदेन प्रागादौ तु ध्वजाष्टकम् ॥३९॥
निवेश्य मध्यवेद्या तु पुनरप्ययव तथा ।
तदर्थान् सर्वसम्भारान् सम्भृत्य सुसमाहित ॥४०॥
दिने कर्मदिनात्पूर्वे सप्तमे पञ्चमेपि वा ।
अङ्कुरानर्पयित्वा तु तत कर्म समारभेत् ॥४१॥
प्रधानदिवसात्पूर्वे दिने देशिकसत्तम ।
स्नात शुक्लाम्बर स्रग्वी कृतन्यासा सुशान्तधी ॥४२॥
कृतादिकोधिवासार्थं सर्वालङ्कारभूषित ।
सर्वसाधनसयुक्तस्त्वर्घ्यपात्रसमन्वित ॥४३॥

माङ्गल्यकुम्भमादाय ध्यायमानोऽच्युतं हृदि ।
सह चैकायनैर्विप्रैः सदागमपरायणैः ॥४४॥
तथा ऋङ्मयपूर्वैस्तु आमूलाद्भगवन्मयैः ।
भेरीपटहवादित्रशङ्खशब्दादिकैः सह ॥४५॥
ऋग्यजुस्सामपूर्वैस्तु प्रशस्ताः सम्पठन् श्रुतीः ।
द्वारपालार्चनं कृत्वा यागागारं प्रविश्य च ॥४६॥
सम्मृत्य ह्यासने ब्याप्तिमर्चयित्वोपविश्य च ।
मध्यपीठसमीपे तु प्राङ्मुखः पश्चिमे पदे ॥४७॥
अग्रे मागल्यकलशमाधारस्योपरि न्यसेत् ।
विप्रानृङ्मयपूर्वांश्च उपवेश्य च पूर्ववत् ॥४८॥
पूर्वोक्तस्त्वधिकैर्युक्तो द्रव्यैर्द्रव्यगणं शुभं ।
यश्च यत्रोपयोज्यस्तु तत्र तं सम्प्रवेशयेत् ॥४९॥
मन्त्राणामुपदेष्टा च अनुकूलो महामतिः ।
योक्तव्यः कर्मदक्षस्तु सर्वेष्ववसरेषु च ॥५०॥
दक्षिणे ह्यात्मनो विप्र ! एकचित्तः समाहितः ।
स्वयं वस्त्वनुसन्धाय हवनार्चनकर्मणाम् ॥५१॥
आस्ते ह्युत्पत्तिपूर्वाणां न्यासान्तानामनन्यधीः ।
करशुध्यादि सर्वं तु चक्रादिन्यासपश्चिमम् ॥५२॥
सर्वं क्रमेण कृत्वा तु पुण्याहं वाचयेत्ततः ।
पूर्वोक्तविधिना कुर्यात्सहोमं कलशार्चनम् ॥५३॥
कुर्यात्सतोरणानां च ध्वजानां स्थापनं ततः ।
सत्यादिके चतुष्के तु मध्यवेद्यां ध्वजाष्टके ॥५४॥
प्रभवाप्यययोगेन यजेत्प्रागादियोगतः ।
उत देवा अवहिता ऋङ्मयान् पाठयेत्ततः ॥५५॥
प्रागादिदिक्चतुष्केषु तोरणानां चतुष्टये ।

सुशोभनं सुभद्रं च सुगंधं च मनोत्कमात् ॥५६॥
सुगोत्रं च ततश्चक्रं सिद्धेश्वरसंयुतम् ।
उपरिष्टान्मुनिश्रेष्ठा ! पूजयेत्प्रतितोरणम् ॥५७॥
एतेषामथ वा पूर्वं भवेद्द्वार्स्थं सहार्चनम् ।
पाठयेत् द्वारपालीयं साम सामविदन्ततः ॥५८॥
अथार्घ्यपुष्पभृन्मूर्तिधरैर्यात्समावृत ।
यत्र तिष्ठति विश्वेश पठिनग्नशिराश्चित. ॥५९॥
तत्रावलोकन तेषा कुर्यात्सन्ताडनादिकम् ।
चक्राम्त्रमन्त्रितैः स्नानकलशैः स्नापयेत्तत. ॥६०॥
सिद्धार्थकै. तथा पञ्चगव्यमृद्भूतिवारिणा ।
वल्मीकमृज्जलेनाथ चक्राङ्कापविवारिणा ॥६१॥
संक्षाल्याभ्यर्च्य चोद्धृत्य क्षालयेदस्त्रवारिणा ।
तमर्घ्येणार्चयित्वा च तनम्नन्मान्त्रितान् करे ॥६२॥
सिद्धार्थकान् दक्षिणे तु वध्वाग्रे पाठयेदृचम् ।
प्ररोहण तथा सर्वान्नयेत्प्रतिसरे मणीन् ॥६३॥
सर्वत्र वेष्टित कृत्वा समारोप्य रथोत्तमे ।
कर्मारम्भ च पटनस्तस्य दक्षिणदिङ् न्यसेत् ॥६४॥
ऋग्सामपूर्वान् वामे तु ब्राह्मणाश्च चतुश्चतु ।
पुरतोऽस्य स्मरन्त्यायात्म्यय विप्रास्तु सूदयन् ॥६५॥
सनृत्यगीतवादित्रस्तुतिमङ्गळपाठकै ।
इदंविष्णुर्विचक्रम इति ऋङ्मये सद्पाठकैः ॥६६॥
एकायनान्तदन्ते तु ओत्रमोक्षणे तु यत् ।
तथैव शाकुनं सूक्त श्रीसूक्तेन समन्वितम् ॥६७॥

स्वर्णादिनार्थिनः शक्त्या तर्पयंस्तान्निवेशयेत् ।
यागभूमिं ततो बिम्बमवरोप्य रथादिकात् ॥६८॥
निषण्णं दृढकाष्ठोत्थतोरणे सन्निवेश्य च ।
स्नानभूमौ ततः कुर्यादस्त्रेणाज्यतिलाहुतीः ॥ ६९ ॥
यद्वा पूर्वं समानीय पीठं ब्रह्मशिलान्वितम् ।
भूमिष्ठे गर्भपीठे तु वेदिकायां निवेश्य च ॥ ७० ॥
ततो बिम्बं समानीय स्थापयेत्पिण्डिकोपरि ।
स्थाप्यमाने बृहद्बिम्बे विशेषः कथ्यते द्विजः ! ॥७१॥
पूर्ववत्कर्मशालायां संस्थाप्याकारशुद्धये ।
संस्नाप्य विधिना कृत्वा नयनोन्मीलनं ततः ॥ ७२ ॥
स्नपनं बृहदापाद्य केवलं वा महद्भवेत् ।
स्नानकर्म शिलादीनामीषत्कृत्वा तु सार्चनम् ॥७३॥
उत्थाप्य मूर्तिपार्थैस्तु बहुभिस्तु रथस्थितम् ।
समानीय ततो यत्नात्प्रासादाभ्यन्तरं तु वै ॥७४॥
यथावद्रत्नविन्यासपूर्वं पीठे निवेश्य च ।
बृहद्बिंबे ततः कुर्यात्कर्मबिंबेऽखिलं तु वै ॥ ७५ ॥
सन्निरोधस्तु मन्त्राणां तत्र स्नमोदये स्मृतः ।
आबृहत्स्नपनात्पूर्वं यत्किंचिदपि तत्र तत् ॥७६॥
निर्वर्तनीयं पूर्णान्तं बुध्वैवं शाड्मुनीश्वराः ! ।
तथा कार्यं शुभो येन मुहूर्तो नावसीदति ॥७७॥
एवं हि चित्रपूर्वाणामन्येषां मुनिसत्तमाः ! ।
सरत्नब्रह्मपाषाणवर्जितानां समाचरेत् ॥७८॥
स्नानाद्यं कर्म चित्रे तु तत्समीपेऽथ दर्पणे ।
कर्मबिंबं विनान्येषां प्रम्वापाद्यं हि विष्टरे ॥७९॥
कुर्यात्प्रवेशपूर्वं तु सर्वमुत्सवपश्चिमम् ।

सुशोभन सुभद्र च सुगध च यजेत्क्रमात् ॥५६॥
सुगोत्र च ततश्चक्र विहगेश्वरसयुतम् ।
उपरिष्टा मुनिश्रेष्ठा ! पूजयेत्प्रतितोरणम् ॥५७॥
एतेषामथ वा पूर्वे भवेद्वार्स्थे सहार्चनम् ।
पाठयेत् द्वारपालीय साम सामविदस्तत ॥५८॥
अथार्घ्यपुष्पभून्मूर्तिधरैर्भार्यारसमावृत ।
यत्र तिष्ठति विश्वेश पीठब्रह्मशिलान्वित ॥५९॥
तत्रावलोकन तेषा कुर्यात्स-ताडनादिकम् ।
चक्रास्त्रमन्त्रिते स्नानकलशै स्नापयेत्तत ॥६०॥
सिद्धार्थकै तथा पञ्चगव्यमृद्भूतिवारिणा ।
वल्मीकमृज्जलेनाथ चक्राङ्कैपवित्रवारिणा ॥६१॥
सक्षाऽयाभ्यर्च्य चोद्धृत्य क्षालयेदस्त्रवारिणा ।
समर्घ्येणार्चयित्वा च ततस्तन्मन्त्रितान् करे ॥६२॥
सिद्धार्थकान् दक्षिणे तु बध्वाग्रे पाठयेदृचम् ।
प्ररोहण तथा सर्वान्नयेत्प्रतिसरे मणीन् ॥६३॥
सर्वत्र वेष्टित कृत्वा समारोप्य रथोत्तमे ।
कर्मारम्भ च पठतस्तस्य दक्षिणदिङ् न्यसेत् ॥६४॥
ऋक्सामपूर्वान् वामे तु ब्राह्मणाश्च चतुश्चतु ।
पुरतोऽस्त्र स्मरन्थाथात्म्य विप्रास्तु सुदयन् ॥६५॥
सानुचर्गीतवादित्रस्तुतिमङ्गळपाठकै ।
इदविष्णुर्विचक्रम इति ऋङ्मयै सद्पाठकै ॥६६॥
ग्रामनास्तदन्ते तु ओत्रमेव्रक्रणे तु यत् ।
नैवेद्य दापुन सुयत श्रीसूक्तेन समन्वितम् ॥६७॥

स्वर्णादिनार्थिनं शक्त्या तर्पयन्तान्निवेशयेत् ।
यागभूमिं ततो बिम्बमवरोप्य रथादिकात् ॥६८॥
निषण्णं दृढकाष्ठोत्थतोरणे सन्निवेश्य च ।
स्नानभूमौ ततः कुर्यादस्त्रेणाज्यतिलाहुती ॥ ६९ ॥
यद्वा पूर्वं समानीय पीठं ब्रह्मशिलान्वितम् ।
भूमिष्ठे भद्रपीठे तु वेदिकाया निवेश्य च ॥ ७० ॥
ततो बिम्बं समानीय स्थापयेत्पिण्डिकोपरि ।
स्थाप्यमाने बृहद्बिम्बे विशेषः कथ्यते द्विज ! ॥७१॥
पूर्ववत्कर्मशालायां सम्स्थाप्याकारशुद्धये ।
संस्थाप्य विधिना कृत्वा नयनोन्मीलनं ततः ॥ ७२ ॥
स्नपनं गृहदापाद्य केवलं वा बहूदकैः ।
स्नानकर्म शिलादीनामीपत्कृत्वा तु सार्चनम् ॥७३॥
उत्थाप्य मूर्तिपाद्यैस्तु बहुभिस्तु रथस्थितम् ।
समानीय ततो यत्नात्प्रासादाभ्यन्तरं तु वै ॥७४॥
यथावद्रत्नविन्यासपूर्वं पीठे निवेश्य च ।
गृहद्बिम्ब ततः कुर्यात्कर्मबिम्बेऽखिलं तु वै ॥ ७५ ॥
सन्निरोधस्तु मन्त्राणां तत्र लग्नोदये स्मृतः ।
आगृहस्नपनात्पूर्वं यत्किंचिदपि तत्र तत् ॥७६॥
निर्वर्तनीयं पूर्णान्तं बुधैर्वै प्राङ्मुनीश्वराः ! ।
तथा कार्यं शुभो येन मुहूर्तो नावसीदति ॥७७॥
एवं हि चित्रपूर्वाणामन्येषां मुनिसत्तमाः ! ।
सरत्नकक्षपाषाणवर्जितानां समाचरेत् ॥७८॥
स्नानाय कर्म बिम्बे तु तत्समीपेऽथ दर्पणे ।
कर्मबिम्ब विनान्येषां मस्वापाद्य हि विष्टरे ॥७९॥
कुर्यात्प्रवेशपूर्वं तु सर्वमुत्तानपश्चिमम् ।

शक्तिभि र्मूर्तिभिश्च गरुडाद्यैर्यदा सह ॥८०॥
समाचरेत्प्रतिष्ठान मूर्तिभिस्य वै सह ।
तदानीं तानि बिम्बानि यागभूमौ प्रवेशयेत् ॥८१॥
एवं प्रवेश्य तद्विव स्नानार्थं स्थापयेद्घटान् ।
अथ वा कर्मदिवसात्पूर्वेद्युर्वा परे पुरा ॥८२॥
प्रागुक्तविधिना कृत्वा सहोमं कलशार्चनम् ।
आचार्यो मूर्तिपैः सार्धं कर्मशालां प्रविश्य च ॥८३॥
प्राप्तेऽपराह्णसमये बिम्बसंस्कारशुद्धये ।
संस्थाप्य विधिना पश्चाद्बिम्बं तोयेऽधिवास्य च ॥८४॥
अपरस्मिन्दिने प्राप्ते देशिकस्तु कृताह्निकः ।
जलादुत्थाप्य तद्बिम्बं यागभूमौ प्रवेशयेत् ॥८५॥

मुनयः ।

तोयाधिवासनविधिः कथं कार्यो मुनीश्वर ।
तद्विधानं विस्तरेण वदस्व वदतां वर ॥८६॥

नारदः ।

जलाधिवासनविधिं शृणुध्वं मुनिपुङ्गवाः ।
प्रासादस्य विशुद्ध्यर्थं बिम्बशुद्ध्यर्थमेव च ॥८७॥
मानोन्मानप्रमाणानामूनाधिक्योपशान्तये ।
जगदाप्यायनार्थं च सर्वसम्पूर्णसिद्धये ॥८८॥
प्रतिष्ठार्थं त्वारम्भात्पूर्वमेव शुभे दिने ।
पञ्चगव्यादिना स्नानं पूजाहोमौ तथा जपम् ॥८९॥
समाचरेत्प्रयत्नेन यद्येव न कृतं पुरा ।
तेनैव तेन विधिना जलवासं समाचरेत् ॥९०॥
नदीषु दीर्घिकायां वा तटाके निर्झरे ह्रदे ।
गर्भगेहे मनि कुर्यात् स्नानं यथाविधि ॥९१॥

असम्भवे जलद्रोण्या कटाहे धातुनिर्मिते ।
यथासम्भवमन्यस्मिन् पात्रे वा मृण्मयादिके ॥९२॥
अल्पतोये श्मशानान्ते लवणोदादिप्लुते ।
कटुके च कषाये च तिक्ते फनैश्च दूषिते ॥९३॥
चैत्यवृक्षसमीपे च नीचावाससमीपके ।
वर्णान्तरयुते स्वल्पे ऊषरे शैवलान्विते ॥९४॥
एवमादिषु दुष्टेषु जलवासं न कारयेत् ।
एकत्रिपञ्चरात्रं वा जलमध्येऽधिवासयेत् ॥९५॥
देशकालानुसारेण सद्यो वा जलवासनम् ।
प्रतिष्ठादिवसात्पूर्वं तृतीये पञ्चसप्तमे ॥९६॥
दिनेऽपराह्णसमये कर्मशालां प्रविश्य च ।
अस्त्रमन्त्रेण सम्प्रोक्ष्य बिम्बं सन्ताडयेत्तत ॥९७॥
सिद्धार्थकैस्तिलैर्दर्भैरस्त्रमन्त्राभिमन्त्रितैः ।
सस्नाप्याकारशुद्ध्यर्थं षड्भिः सिद्धार्थकादिभिः ॥९८॥
वस्त्राभरणपुष्पाद्यैरलङ्कृत्य च भूषणैः ।
पूर्ववत्कौतुकं बध्वा समारोप्य रथादिके ॥९९॥
पूर्ववच्छ्रुतिघोषैश्च शङ्खभेर्यादिकैः सह ।
विविधैर्नृत्तगेयैश्च तथान्यैर्मङ्गलैः सह ॥१००॥
ग्रामं वा नगरं वापि प्रासादं च प्रदक्षिणम् ।
भ्रामयित्वा जलोद्देशमानयेन्मूर्तिपैः सह ॥१०१॥
प्रपायां तु जलाभ्यर्णे अवरोप्य रथादिकात् ।
विष्टरे विनिवेश्याथ प्राङ्मुखं वाप्युदङ्मुखम् ॥१०२॥
मण्टपं जलमध्ये तु वातवृष्टिक्षमं शुभम् ।
चतुस्स्तम्भसमायुक्तं चतुस्तोरणभूषितम् ॥१०३॥
वितानध्वजसंयुक्तं वेष्टितं दर्भमालया ।

विचित्रैश्च फलैर्युक्तं द्रुमागैः पावनैस्तथा ॥१०४॥
मुक्तादामसमायुक्तं स्रग्दामभिरलंकृतम् ।
कोणे प्रदीपसंयुक्तं चामरैरुपशोभितम् ॥१०५॥
पुरैव कारयित्वा तु कुर्यात्पुण्याहघोषणम् ।
प्राग्वच्छुद्धिमपां कृत्वा तन्मध्ये विन्यसेत्ततः ॥१०६॥
प्रतिमानुगुणं भद्रपीठमास्तरणान्वितम् ।
सोपधानं तदूर्ध्वे तु कल्पयेन्मान्त्रमासनम् ॥१०७॥
अनन्तं कल्पयित्वोर्ध्वे अर्घ्यगन्धादिनार्चयेत् ।
मूलमन्त्रेण विन्यस्य अर्घ्यं पाद्यं तथैव च ।१०८॥
आचामं वासितं गन्धमुपवीतोत्तरीयके ।
भूषणानि च माल्यानि दीपं धूपं यथाक्रमम् ॥१०९॥
दत्त्वा कृत्वा घृतारोपं सम्मरेत्संहृतिक्रमम् ।
संहारस्य क्रमं वक्ष्ये समाकर्णयत द्विजाः ! ॥११०॥
आत्मानं सर्वगं ध्यात्वा सर्वज्ञं विष्णुमव्ययम् ।
दुर्गाद्यावाचितो मन्त्री तद्विष्णोरधिवासनम् ॥१११॥
प्रणवेन समारोप्य जीवमर्चाभिमानिनम् ।
उत्क्रम्यात्मैकतां कृत्वा स्वस्मिन् सर्वेश्वरे हरौ ।११२॥
संशोध्य मरुता पूर्णां दग्ध्वा बीजाग्निनाग्निना ।
भाद्भिः सम्प्लाव्य तां वायुशुष्कां वह्नौ विलाप्य च ॥११३॥
संहृत्य वायुना वह्निं वायुमाकाशतां नयेत् ।
आप्याभिमानिदेवैस्तु करणावयवैः सह ॥११४॥
तन्मात्राभिमानिभिस्तान्येव क्रमात्संहृत्य देशिकः ।
नभो मनसि संहृत्य मनोऽहंकृति तत्पुनः ॥११५॥
गन्धत्यानि तं चापि नयेदव्याकृतेस्तथा ।
शान्तान्ते परे व्योम्नि निष्कले ज्ञानविग्रहे ।११६॥

त ध्यायेत्परमानन्दे सस्थित शान्तविग्रहम् ।
यस्मिन्नव्याकृत लीन सावस्थ यत्स्वरूपकम् ॥११७॥
वासुदेवोपि विज्ञेय सर्वात्मा सर्वकृत्प्रभु ।
तस्मिन्नेव तु सहृत्य पृथिव्यादीनि देशिक ॥११८॥
एव ध्यात्वा यथान्याय बिंब वस्त्रेण वेष्टयेत् ।
रथगमयित्वाशुकैर्दिव्यैर्दर्भे सर्वे सगादिभि ॥११९॥
आचार्यो मूर्तिपैर्मन्त्रान् व्यापकाश्चतुरोपि वा ।
पठद्भि शाकुन सूक्त तथा चान्यैस्त्रयीमयै ॥१२०॥
आम्नायोद्घोषणपरै सार्धमादाय तीरत ।
तद्बिब जलमध्ये तु पीठोर्ध्वे शाययेत्स्वयम् ॥१२१॥
अम्भस्येति च मन्त्रेण प्राड्मूर्धानमुदड्मुखम् ।
दुन्दुभिर्विविधाकारा नादयित्वा दिशो दश ॥१२२॥
जयशब्दैश्च गीताद्यै सपुण्याहपुरस्सरम् ।
आत्मन्यास क्रमात्कृत्वा दिशोऽस्त्रेणावबध्नियात् ॥१२३॥
अवलोक्य च नेत्रेण कवचेनावकुण्ठयेत् ।
लोकपालान् बहिर्ध्यात्वा स्थानादस्मात्समन्तत ॥१२४॥
तीरदेशमनुप्राप्य कुम्भ सूत्रेण वेष्टितम् ।
वेष्टित नववस्त्राभ्या सापिधान सपल्लवम् ॥१२५॥
सस्थाप्य तद्दक्षिणत करक च तथैव हि ।
इन्द्रादीशानपर्यन्त कलशान् परितो न्यसेत् ॥१२६॥
सवस्त्रान् सापिधानाश्च सहिरण्यान् सकूर्चकान् ।
कुम्भे विशाखयूप तु करके च सुदर्शनम् ॥१२७॥
आवाह्यार्घ्यादिनाभ्यर्च्य इन्द्रादीन् कलशाष्टके ।
बिम्बस्य शिरसो देशे कुम्भ च करक न्यसेत् ॥१२८॥
अर्चित परितश्चाष्टौ कलशान्विन्यसेत्क्रमात् ।

प्राङ्मुखं समवस्थाप्य वारिभिः क्षाळयेत्ततः ॥१५४॥
लोहजाश्चेद्विशुद्ध्यन्ति तिन्त्रिणीफलवारिभिः ।
प्रायश्चित्तादिकं कृत्वा विधानेन मुनीश्वराः ॥१५५॥
वस्त्राभरणपुष्पाद्यैरलङ्कृत्य मनोहरैः ।
यानमारोप्य तद्बिम्बं शङ्खभेर्यादिसंयुतम् ॥१५६॥
ग्रामं प्रदक्षिणीकृत्य ह्यालयं वा समानयेत् ।
यागगेहं तु यानादेरवरोप्य निवेशयेत् ॥१५७॥
स्थाने पूर्वोदिते पश्चादारभेत्स्नपनं गुरुः ।
लेख्यादौ संप्रविश्याथ प्रासादं मूर्तिपैः सह ॥१५८॥
प्राक्चाधिवासितं कूर्चं जलात्तस्मात्समुद्धरेत् ।
बिम्बाच्च वस्त्राभरणमाल्यान्यपनयेत्ततः ॥१५९॥
पीठे तु स्नानकुम्भानां स्थापनार्थं प्रकल्पिते ।
पूर्वोदितं स्थूलपरं स्नपनं स्थापयेद्द्विजाः ॥१६०॥
पूर्वादिपश्चिमाशान्तं पृथक्स्नपनमण्टपम् ।
विहितं यत्र तत्रैव देवदेवस्य वामतः ॥१६१॥
यातुधानपदयानदग्निकोणादितो न्यसेत् ।
स्नपनं स्थूलपराख्यं स्थूलसूक्ष्मं तु पृष्ठतः ॥१६२॥
ईशकोणात्समारभ्य यावद्यामयगोचरम् ।
देवस्य दक्षिणे पार्श्वे ईशानाद्वायुपश्चिमम् ॥१६३॥
स्थूलस्थूलाभिधं स्नानं स्थापयेत्क्रमयोगतः ।
अधिवासदिने कुर्यात्स्नानं स्थूलपराभिधम् ॥१६४॥
प्रतिष्ठादिवसे स्यात्स्नपनं स्थूलसूक्ष्मकम् ।
चतुर्थे दिवसे स्नानं स्थूलस्थूलाभिधं भवेत् ॥१६५॥
[illegible] तद्दिने नवस्नपनं स्थापयेद्गुरुः ।
[illegible] स्नानत्रयाणां समास्थाप्य पूर्ववत् ॥१६६॥

तदर्पणावसानेऽथ शयनं कल्पयेत् द्विधा ।
नयनोन्मीलनार्थं तु शयनं कल्पयेत्पुरा ॥१६७॥
द्वादशाक्षरमन्त्रेण पीठं सम्प्रोक्षयेत्ततः ।
प्रागग्रानुदगग्रान्वा दर्भानास्तीर्य पुष्कलान् ॥१६८॥
पञ्चभारमितान् शालीनथ वा चार्धसमितान् ।
वृत्तं वा चतुरश्रं वा कवलानुपरि न्यसेत् ॥१६९॥
उपधानानि चित्राणि शयनाङ्गानि कल्पयेत् ।
माङ्गल्यकुम्भान् सम्स्थाप्य दिगष्टकसमाश्रितान् ॥१७०॥
ततो बिम्बाधिवासार्थं शयनं परिकल्पयेत् ।
तदर्थं वेदिकोर्ध्वे तु कुर्यात्स्वस्तिकमण्डलम् ॥१७१॥
रजसा कुसुमैर्वाथ चतुर्वर्णैर्महोज्वलैः ॥
प्रागग्रानुदगग्रांश्च दर्भानास्तीर्य तत्परम् ॥१७२॥
पञ्चभारप्रमाणेन शालीम्स्तत्र विनिक्षिपेत् ।
तदर्धं तण्डुलं शुद्धं तदर्धं तु तिलं तथा ॥१७३॥
उपर्युपरि निक्षिप्य लाजानूर्ध्वे तु विन्यसेत् ।
काष्ठजं सुदृढं स्निग्धं चतुर्गात्रसमन्वितम् ॥१७४॥
चतुष्पादसमायुक्तं चतुरश्रायतं ततम् ।
खट्वासञ्जितपर्यङ्कं तदूर्ध्वे स्थापयेत्ततः ॥१७५॥
दुकूलं मृदुतल्पं च विन्यसेत्सोपरिच्छदम् ।
केवलं तल्पमात्रं वा विन्यसेदथ वा द्विजाः ॥१७६॥
खट्वातूले विस्तृत्याथ लाजोर्ध्वे रत्नकम्बलम् ।
न्यसेदभिनवं पश्चाद्वस्त्रं कार्पासजं नवम् ॥१७७॥
क्षौमवस्त्रं न्यसेन्मध्ये चित्रवस्त्रं ततोपरि ।
शिरोपधानसंयुक्तं पादगण्डूकसंयुतम् ॥१७८॥
सर्वानभिनवान् शुभान् सकपोलोपधानकान् ।

सुगन्धधूपितान् वस्त्रान् कुसुमामोदसम्मितान् ॥१७९॥
इन्द्रादीशानपर्यंत कलशान् सूत्रवेष्टितान् ।
तोयपूर्णान् समान् स्निग्धान् सापिधानान् सवस्त्रकान्॥१८०॥
सरलपल्लवैर्युक्तान् धान्यराशिषु निक्षिपेत् ।
शङ्खचक्रगदापद्मैर्ध्वजैश्चेन्द्रादिषु क्रमात् ॥१८१॥
श्रीवत्स गरुड कूर्मं सौवर्णं तेषु निक्षिपेत् ।
मध्ये मध्ये च कुम्भाना धान्योर्ध्वे मङ्गलान् न्यसेत् ॥१८२॥
शङ्ख चक्र तथा लक्ष्मीं कुम्भ श्रीवत्समेव च ।
दर्पण स्वस्तिक मत्स्ययुग्म वै मङ्गलाष्टकम् ॥१८३॥
वस्त्रैराच्छादितास्तद्वत् न्यसेत्कोणेषु पालिका ।
एव शयनयुग्म तु प्रकल्प्य तदधो यजेत् ॥१८४॥
सर्वाधारमनन्त तु तदूर्ध्वे सर्वग प्रभुम् ।
प्रभवाप्यययोगेन यजेत्प्रागादियोगत ॥१८५॥
पाठयेत्सर्पसामादि सज्ञा ज्ञानबलात्मिकाम् ।
हुत्वा शताष्टसख्य तु मूल तदनु कल्पयेत् ॥१८६॥
मण्डल पावने रागे सितार्द्यैर्मांगल्यकै ।
तदूनाधिकशान्त्यर्थं हुत्वा कुण्डगण तत ॥१८७॥
सम्कुर्यात्प्रतिकुण्डस्य निकटे कुम्भमध्यगम् ।
प्रभवाप्यययोगेन चातुरात्म्य तु सयजेत् ॥१८८॥
हृदादि यद्वा दिक्स्थेषु विदिक्स्थेषु तदस्त्रपम् ।
दत्त्वा तदर्थं पूर्णा तु पूर्णात्पूर्णं च पाठयेत् ॥१८९॥
एकायनान्यजुर्भयानाश्राावितमनन्तरम् ।
एव सर्व समापाद्य प्रयायाद्दिवसन्निधिम् ॥१९०॥
विप्रमर्घ्यादिनाभ्यर्च्य गुरु स्वपनमारभेत् ।
अथास्त्रमन्त्रेण पुरा मागल्यकलशाम्भसा ॥१९१॥
सगेच्य पिंच तदनु स्वापयेत्तन्मृदाम्भसा ।

पाठयेत्तत्र कुश्माण्डान् बलमन्त्रादनन्तरम् ॥१९२॥
ततो गोमयकुम्भेन इह गावः प्रपाठयेत् ।
भूतिस्त्वमिति मन्त्रेण पाठ्यमाने विभूतिना ॥१९३॥
पञ्चगव्येन तदनु पाठयेच्छाकरन्ततः ।
पूर्ववच्च ततोऽभ्यर्च्य विधिवच्चमसांबुना ॥१९४॥
क्षाळयित्वा जलैः शुद्धैरभिषिच्य ततोऽर्चयेत् ।
शिल्पिदोषविनाशार्थं स्नानमेतदुदाहृतम् ॥१९५॥
परिधाय ततो विप्रा वाससी अधरोत्तरे ।
नयनोन्मीलनार्थं तु शयनं यत्प्रकल्पितम् ॥१९६॥
तत्र पूर्वशिरस्कं च बिंबं मस्वापयेत् द्विजाः ।
ततः समन्तार्द्धिंबं तु छादयेत्कम्बळादिभिः ॥१९७॥
सौवर्णं राजतं चैव पात्रमाढकपूरणम् ।
धान्यराशौ निधायाग्रे पूरयेत यथाक्रमम् ॥१९८॥
मधुना सर्पिषा चैव तत्तत्तु मधुपात्रके ।
अर्कमण्डलमध्यस्थं मार्ताण्डायुतसन्निभम् ॥१९९॥
ध्यात्वा मन्त्रेशमभ्यर्च्य तदन्यस्मिन् मुनीश्वराः ! ।
चन्द्रमण्डलमध्यस्थं धेनुमुद्रासमन्वितम् ॥२००॥
मन्त्रं वै सौरभीयं च स्फुरदिन्दुशतप्रभम् ।
तदन्तरस्थं मन्त्रेशं हिमाचलनिभं स्मरेत् ॥२०१॥
तत्तत्तैरमृतौघैश्च शशिजैर्धेनुजैरपि ।
सुभावितं स्मरेद्बिंबं मधुवातेति मन्त्रतः ॥२०२॥
घृतादि मन्त्रयेत्पश्चाद्वस्त्रेणाच्छादयेत्तु तत् ।
अष्टांगुळा च सौवर्णी शलाका राजती तथा ॥२०३॥
केवला वापि सौवर्णी शलाका स्यात् द्विजोत्तमाः ! ।
अष्ट धान्यानि परितः पात्रेषु विनिवेशयेत् ॥२०४॥

गाः कन्यकाः शुभाकारा भूषणैश्चापि भूषिताः ।
आनीय स्नापयेत्पार्श्वे ब्रह्मघोषेण घोषयेत् ॥२०५॥
स्वयं शलाकां सौवर्णीं कृत्वा नेत्राभिमन्त्रिताम् ।
मध्वाक्ता च तया नेत्रं दक्षिणं त्वीपदुल्लिखेत ॥२०६॥
संस्मरन् परमं ज्योतिर्नेत्रमन्त्रेण देशिक ।
आज्याक्तया तया वापि राजत्या वाममुल्लिखेत् ॥२०७॥
तन्मन्त्रितेन शस्त्रेण शिल्पी स्वानोऽवलोकित ।
यथावत्प्रकटीकुर्यात् विधिदृष्टेन वर्त्मना ॥२०८॥
वारुणं पाठयेत्साम सह चान्द्रेण सामगान् ।
पूरयेन्मधुसर्पिर्भ्यां नेत्रयुग्मं क्रमेण तु ॥२०९॥
बौषडन्तेन मूलेन तेनैव जुहुयाद्धृत ।
सिञ्चन्तममृतौघं तु हृदावन्तेन रोचयेन ॥२१०॥
तन्मूर्ध्नि शशिबिम्बं तु ध्यायेत्तापादिशान्तये ।
व्यपोह्याच्छादनपटं दर्शयन्मधुसर्पिषी ॥२११॥
अष्ट धान्यानि गाश्चैव कन्यकाः पुस्त स्मिता ।
मध्वाज्ये च शलाके च प्रदद्याच्छिल्पिने द्विजा ॥२१२॥
अष्ट धान्यानि गाश्चैव शय्योपकरणं तथा ।
प्रदद्याद्देशिकेन्द्राय साधक सिद्धिलालस ॥२१३॥
यद्वा सन्यादि सकलमाचार्याय निवेदयेत् ।
यथाशक्ति तथान्येषां मूर्तिपानां च दक्षिणा ॥२१४॥
मृण्मये मूलबिम्बे तु निर्मिमाय प्रविश्य तु ।
प्रासाद मत्र कुर्वीत नयनोन्मीलनक्रियाम् ॥२१५॥
एव क्रियादिसर्वाणि नयनोन्मीलनं भवेत ।
एव नेत्रं समुन्मील्य बिम्बस्य तु तत. परम् ॥२१६॥
दत्ताप्यायनं कुर्यादस्मेन हृदयेन च ।

आमूर्ध्नो मूलमन्त्रं तु मूर्त्यर्थं पूर्ववत् न्यसेत् ॥२१७॥
स्नानार्थतः पुरा कलशे पीठे बिम्बं नयेत्ततः ।
व्याप्तिसद्वासमायुक्ते सम्कृते प्रोक्षणादिना ॥२१८॥
आधारादिक्रमोपेते समालब्धे सुपूजिते ।
पीठेवतार्य संवेष्ट्य वाससी ह्यधरोत्तरे ॥२१९॥
अथ क्रमोदितैः कुम्भैर्द्विष्पोढावर्तितैर्हृदा ।
स्नापयेत्पाठयेद्विप्रानोषधीनामिति श्रुतिम् ॥२२०॥
या ओषधय इत्यादि ऋग्वेदास्तदनन्तरम् ।
एवं दशावशिष्टान्तैः सेचिते कलशैः सति ॥२२१॥
ततः कुम्भचतुष्केण चतुर्भिर्मूर्तिधारकैः ।
ऋक्सामपूर्वैर्विधिवत् स्नपनीय च पाठयेत् ॥२२२॥
उदुत्तमं हि ऋग्वेदान् पाठयेद्द्रविणं यजुः ।
ततस्तु वारुणं साम सामज्ञोऽथर्वणस्ततः ॥२२३॥
अयन्ते वरुणश्चेति पवित्रं ते ततो ऋचम् ।
वसो पवित्रं हि यजुः पाठयेत्सुमहास्ततः ॥२२४॥
पवित्रं ते हि यत्साम सयोज्यैकायनास्ततः ।
मूर्तिपान् समुदायेन पावमानीचतुष्टयम् ॥२२५॥
तदन्ते तु परं मन्त्रं व्यूहीय भगवानिति ।
पवित्रमन्त्रं तदनु इदंविष्णुर्विचक्रमे ॥२२६॥
ततो विभवमन्त्रैस्तु सर्वैस्सम्मन्त्रितेन च ।
कुम्भेन सेचयित्वा तु व्यूहमन्त्रैः परेण तु ॥२२७॥
स्नापयित्वाऽर्चयित्वा च जुहुयात्साधिकं शतम् ।
यथावत्प्रणवेनाथ व्याप्तिं कृत्वा च पाठयेत् ॥२२८॥
मामगामेति ऋग्वेदान् अग्नेवायुर्यजुर्मयान् ।
प्राणापानं हि यत्साम ततः प्राणाय वै नमः ॥२२९॥

पुण्याहजयघोषेण वेदध्वनियुतेन च ।
शङ्खादित्रनिर्घोषपटहैर्गीतिभि सह ॥२५१॥
ग्रामाभिगतौ कृत्वा देवदेवस्य देशिक ।
पाठयेद्वाङ्मयं मन्त्रमुत्तिष्ठेति ततस्सह ॥२५२॥
यात्रोपकरणैर्मन्त्रं कृत्वा ब्रह्मरथे स्थिरे ।
सुयन्त्रिते च श्रीगन्धदध्योदनसमन्विते ॥२५३॥
सुभिक्षक्षेमशान्त्यर्थं परमान्नफलैर्युते ।
पाठयेदन्यनामीयमृङ्मयं तदनन्तरम् ॥२५४॥
तन्मन्त्रान् बलमन्त्रं तु दशार्धेति मुनीश्वरा ।
स्वयमायन्नमरुद्धं हृदा तु कवचं जपेत् ॥२५५॥
भ्रामयेद्बलिदानं च क्रियमाणं तु सर्वदिक् ।
रक्षाचनत्राणां पूर्ववत् क्षेपमाचरेत् ॥२५६॥
दिव्याद्यायतनानां च कार्या पूजा यथोचिता ।
पञ्चरात्रविदां चैव यतीनां ब्रह्मचारिणाम् ॥२५७॥
षट्कर्मनिरतानां च दानं दीनजनेष्वपि ।
रथस्थे मन्त्रबिम्बे तु यावत्तद्गतं नर्तेत् ॥२५८॥
तद्वत्तूर्यघोषेण तावत्क्रतुशतं फलम् ।
आप्नोत्यागमचक्र ब्रह्मस्थानो नियतव्रत ॥२५९॥
ततस्तोरणदेशस्थं रथं कृत्वार्चयेत्प्रभुम् ।
पाद्यार्घ्यपुष्पधूपैश्च नमस्कृत्य च पाठयेत् ॥२६०॥
उत्तिष्ठेति द्विपदकार्णं मानितन्तु चाविलम् ।
सम्पठन् पौरुषं सूक्तं यागवेश्म प्रवेशयेत् ॥२६१॥
शय्यायां मारशिरे बिम्बं शाययेद्धृदयेन तु ।
देशिको मूर्तिपैः सार्धं यागहोमं समापयेत् ॥२६२॥
तन्मध्यस्थे देशे चक्राधारस्थिते घटे ।
पूर्वविन्यस्ते नेत्रमन्त्रसम्पुटितं यजेत् ॥२६३॥

पूजयेन्मङ्गळान्यष्टौ प्रागादौ तु स्वनामभिः ।
अष्टासु तत्र कुम्भेषु पुरैव स्थापितेषु च ॥२६४॥
वासुदेवादयः पूज्या प्रभवाप्यययोगतः ।
हृदादि यद्वा दिक्स्थेषु विदिक्स्थेषु तदस्त्रकम् ॥२६५॥
यद्वा प्राच्या तु वाराहो नारसिंहस्तु दक्षिणे ।
प्रतीच्यां श्रीधरो देवो हयवक्त्रस्तथोत्तरे ॥२६६॥
आग्नेय्यां भार्गवो रामो नैर्ऋते राम एव च ।
वायव्ये वामनश्चापि विष्णुरीशानगोचरे ॥२६७॥
स्वनाम्ना पूजयित्वैतानर्घ्यगन्धादिभिस्ततः ।
पूजयित्वार्घ्यगन्धाद्यैः शयनस्थं विभुं ततः ॥२६८॥
चर्मणाच्छादनपटं दत्वा धूपाधिवासितम् ।
मूलेन शयनस्थस्य कुर्यादाप्यायनं ततः ॥२६९॥
देवांविनिकटोद्देशे उपविष्टस्तु देशिकः ।
मन्त्रविद्देवबिम्बस्य मन्त्रन्यासं समाचरेत् ॥१७०॥
केवलादौ मन्त्रबिम्बे तु प्रासादस्थे द्विजोत्तमाः ! ।
उत्सवे कर्मबिम्बे तु विष्टरे वा प्रकल्प्य च ॥२७१॥
प्रस्वाप्य शयने प्राक्प्रासादं सम्प्रविश्य च ।
मन्त्रन्यासादिकं कुर्याद्वक्ष्यमाणविधानतः ॥२७२॥
सुविस्तृतं तद्विधानं शृणुध्वं मुनिपुङ्गवाः ! ।
पीठे पुष्पांजलिं कृत्वा गन्धयुक्तं च साक्षतम् ॥२७३॥
न्यसेदष्टाक्षरं प्राग्वदामूर्ध्नश्चरणान्तिमम् ।
न्यसेद्धृदादिषण्मन्त्रान् स्थानेषु हृदयादिषु ॥२७४॥
किरीटं शिरसो देशे श्रीवत्सं तु गळादधः ।
वक्षसो वामभागे तु विन्यसेत्तदनन्तरम् ॥२७५॥
कौस्तुभं हृदये न्यस्य वनमालां च कण्ठतः ।

देवस्य दक्षिणे हस्ते चक्रं शङ्खं तु वामतः ॥२७६॥
वामहस्ते गदाखड्गौ ह्यथ वा दक्षवामयोः ।
क्रमाल्लाञ्छनमन्त्रांस्तु चक्रादीन् लाञ्छनान्यसेत् ॥२७७॥
श्रियं दक्षिणभागे तु पुष्टिमुत्तरतो न्यसेत् ।
ऊरुमूले वैनतेयमथेदानीं निबोधत ॥२७८॥
चतुर्भुजस्य देवस्य चक्रादेर्विनिवेशनम् ।
मुख्यदक्षिणहस्तेऽब्जं गदां वामकरे न्यसेत् ॥२७९॥
अपरे दक्षिणे चक्रं शङ्खं वामकरे परे ।
अन्यान् लाञ्छनमन्त्रांस्तु यथायोगं च विन्यसेत् ॥२८०॥
अन्येषु षड्भुजाद्येषु मुख्यदक्षादितः क्रमात् ।
सर्वान् लाञ्छनमन्त्रांस्तु यथास्थानगतान् न्यसेत् ॥२८१॥
संस्थाप्या भगवन्मूर्तिर्धत्ते चक्रादिलाञ्छनम् ।
हस्ते येन क्रमेणैव लाञ्छनानि न्यसेत्तथा ॥२८२॥
मन्त्रान् किरीटपूर्वांश्च प्राग्वत्सर्वत्र विन्यसेत् ।
पादादिद्वादशाङ्गेषु ततो दामोदरादिकान् ॥२८३॥
तच्छक्तिकास्तथा मन्त्रान् तद्वद्व्यापकलक्षणान् ।
ऐश्वरेणाथ बीजेन यथावस्थेन भावयेत् ॥२८४॥
पादादि तन्मयेनैव तद्वन्मन्त्रवरेण तु ।
प्राग्वदप्यययुक्त्या तु ह्यन्तर्ज्योतिर्मयात्मना ॥२८५॥
विभुना भावस्वरूपेण तदेवाथ परं पदम् ।
मुद्रां च सर्वगं बुध्वा निस्तरङ्गमिवोदधिम् ॥२८६॥
विधा गदामित्याद्य यत्पाठयेत्पाञ्चरात्रिकान् ।
देहसान्यासिकं मन्त्रं धारणाख्यमनन्तरम् ॥२८७॥
जीमूतस्येति ऋग्वेदान् नासदासीत्तु पाठयेत् ।
क्रमेणानेन हुत्वा तु पदार्थशतसंख्यया ॥२८८॥
निगाना च नभाज्यस्य गन्धैर्गिर्मुनीश्वर ' ।

दत्वा पूर्णाहुतिं प्राग्वदुपसंहारलक्षणाम ॥२८९॥
ततस्तत्परमं ब्रह्म हृयुदितं पूर्ववत् स्मरेत् ।
सर्वशक्तिमयेनैव स्वभावेन स्वकेन तु ॥२९०॥
भोजो नलात्मना यद्वद्गन्धो द्रव्यात्मना तु वै ।
बीजं तरुस्वरूपेण समुद्रो बुद्बुदात्मना ॥२९१॥
एवमन्यपदेस्था या शक्तिः स्वे शक्तिदर्पणे ।
स्थितमादाय विश्वेशं स्वातन्त्र्याच्च मुनीश्वराः ॥२९२॥
मन्त्ररूपां तनुं धत्ते सम्यगाराधनाय च ।
नानात्वमुपयातस्य प्रसरं तस्य चं स्वयम् ॥२९३॥
निष्प्रभत्वं प्रयातस्य विह्वीजनियमस्य च ।
आविष्कृतस्य भेदे वाप्यमूर्तेन मलीमसा ॥२९४॥
अज्ञानगहनेनैव नित्यानित्यामलात्मना ।
स्मृत्वैवं मूलमन्त्रं तु विंयद्दृत्यङ्गं स्मरेत् ॥२९५॥
षट्छक्तिकरणोपेतं तैस्तद्द्रव्यमयीं तनुम् ।
संस्मरेत्संहरन्तं च प्रागुक्तेनैव वर्त्मना ॥२९६॥
स्वरूपममलं भूयः स्मरेन्मूर्त्यात्मना तु तत् ।
नयन्तं पूर्वविधिनाप्येवं स परमेश्वरः ॥२९७॥
मन्त्रात्मना स्वतन्त्रत्वमुपयातो यदा तदा ।
सहस्रशिरसं देवमिति सर्वांस्तु पाठयेत् ॥२९८॥
पाठयेद्ब्राह्मणान् धातर्यद्धक्षेति च मन्त्रपम् ।
योविश्वतश्चक्षुरिति ध्यातव्यो भवतीति च ॥२९९॥
द्वासुपर्णेति तदनु अनेदेवेति वै ततः ।
ऋङ्मयं पौरुषं सूक्तं ततः परतमानिति ॥३००॥
शाश्वताचततः कालकलेति समुदाहरेत् ।
एषाबुद्धिः सप्तयेति अत्रेदानींच पाठयेत् ॥३०१॥

ततोऽर्चयित्वा मन्त्रैश्च शयने बिम्बवृत्तिकम् ।
सांस्पर्शिकैरासनाद्यैर्विविधैरौपचारिकैः ॥२०२॥
हृदयङ्गमसंज्ञैश्च मधुपर्कादिभिर्द्विजाः ! ।
परमान्नादिभिश्चान्नैः पवित्रैः पावनैस्तथा ॥२०३॥
अन्यैश्च विविधैर्भोगैर्यथा चानुक्रमेण तु ।
सर्वं तु सम्प्रदानान्तं कृत्वा पश्चात्तु मण्डले ॥२०४॥

सन्निधीकृत्य सम्पूज्य मन्त्रान् विधिवत्तु ।
अग्नौ सन्तर्पयेत्साङ्गं समिन्मन्त्रकपूर्वकम् ॥२०५॥
जुहुयुर्मूर्तिपाश्चापि स्वे स्वे कुण्डे यथाक्रमम् ।
प्रागादि दिक्षु कुण्डेषु क्रमेण समिधः स्मृताः ॥२०६॥
पलाशवृक्षखदिरबिल्वोदुम्बरसम्भवाः ।
आग्नेयादिविदिक्षु स्युः पिप्पलप्लक्षसम्भवाः ॥२०७॥
न्यग्रोधप्रभवाश्चैव कश्मर्यप्रभवास्तथा ।
पलाशसमिधोऽन्यत्र भूयसा परिकल्पने ॥२०८॥

उक्ताभावे तु सर्वत्र पालाश्यः समिधो मताः ।
चतस्रो धेनवः स्थाप्याः दक्षिणस्यामुदङ्मुखाः ॥२०९॥
गङ्गा सरस्वती गोदा यमुना रूपधारिणी ।
दुग्धैस्तदीयैः श्रपणं चरूणामाहुतिस्तथा ॥२१०॥
श्रपयेत्पायसं पूर्वं शालितण्डुलमाढकम् ।
कृसरं दक्षिणाग्नौ तु पाश्चात्ये गुडमिश्रितम् ॥२११॥

उदीच्यामग्नौ हरिद्रान्नं शुद्धान्नमितराग्निषु ।
प्रत्येकं शतमष्टौ च होमाः स्युः समिदादिभिः ॥२१२॥
तदर्धं वापि पादं वा देशकालानुरूपतः ।
नित्यानिर्यर्वगुरुभिर्भिन्नान्यनुगमान् ॥२१३॥
निजैर्निजकुण्डेषु नैर्मी मन्त्रेण कल्पयेत् ।

स्वमूर्तिकुम्भान्मन्त्रेण जलमुद्धृत्य भाजने ॥२१४॥
बिंबमूर्ध्नि क्रमाद्देयं सर्वरेकायनादिकैः ।
चतुर्दर्भकृतेनैव कूर्चेन तदनन्तरम् ॥२१५॥
पलाशखदिराश्वत्थबिल्वशाखाभिरम्बुभिः ।
सिञ्चेयुर्मूर्तिपाः सम्यक् वेदिकाकलशस्थितैः ॥२१६॥
आचार्यः कोणदेशस्थैर्मन्त्रैश्चैतसशाखया ।
सन्तर्पयित्वा तदनु मन्त्रं सपरिवारकम् ॥२१७॥
आज्यादिना प्रभूतेन दत्वा पूर्णाहुतिं ततः ।
बिंबात्मना प्रयातानां क्ष्मादीनामकरूपिणाम् ॥२१८॥
आपादनेपि प्राणार्थं पिण्डीभूतार्थमेव च ।
आरम्भादेव जातानां छिद्राणां शमने तु वै ॥२१९॥
आप्यायनार्थं मन्त्राणां द्रव्यैर्होमं समाचरेत् ।
द्विषट्केणाहुतीनां च एकैकेन चतुर्दश ॥२२०॥
आचाङ्घ्रेर्जानुपर्यन्तं स्पृष्ट्वाज्यं होमयेत्पुरा ।
आनाभि जानुदेशाच्च तथैव जुहुयाद्दधि ॥२२१॥
नाभेराकण्ठतः क्षीरमामूर्ध्नः कण्ठतो मधु ।
समिधः जुहुयात्सर्वं स्पृष्ट्वा देहन्तु चाखिलम् ॥२२२॥
दत्वा घृतेन वै पश्चात्पूर्णां मूलेन तत्परम् ।
सम्पूज्य बिम्बवत्पीठं भित्त्वा ब्रह्मशिलां तथा ॥२२३॥
प्राणाभिमानदेवं वा यस्य यो निहितस्तु वै ।
चेष्टयित्वाम्बरीश्रिनै चक्रमन्त्रेण वै ततः ॥२२४॥
कार्यो ब्रह्मशिलाहोमः शताष्टाधिकसङ्ख्यया ।
गायत्रीभिस्तदर्धं च तद्वृत्त्याचैः पृथक् पृथक् ॥२२५॥
अजस्यनाभावित्यादि मन्त्रैरेकायनैस्ततः ।
अप्यादिभूतमूर्ते तु भोग्य वापि पृथक् स्थितम् ॥२२६॥

मधुसूदनपर्यन्त पातालशयनादथ ।
सप्तक सप्तक षट्क सपश्येत् क्ष्मादिपञ्चके ॥२०९॥
मनस्यवस्थित ह्येव शक्तीशात्रितय हि यत् ।
बुद्धौ कमलनाभात्मा देव सर्वेश्वर प्रभु ॥२१०॥
पुन स्वसिद्धैर्युक्ताना सर्वेषा पार्थिवे पदे ।
द्विसप्तभेदभिन्ने तु बोद्धव्या संस्थिति शुभा ॥२११॥
तीव्रमन्दादिक बुध्वा भाव भक्तिसमन्वितम् ।
आलम्भनवशात्कुर्यात्सर्वेषा स्वपदे स्थितिम् ॥२१२॥
एष वैभवदीक्षायामधिवासनकर्मणि ।
क्रम उक्तस्त्वथेदानीमपराया निबोध तु ॥२१३॥
आपादान्नाभिदेशान्त महाभूतैर्धरादिकै ।
व्याप्त चतुर्थी वायवतैस्तदूर्ध्वं नभसा पुन ॥२१४॥
पूरित हृदयात च तदुद्देशाच्छिखावधि ।
विभाव्य मनसा व्याप्तमनेनैव क्रमेण तु ॥२१५॥
स्थितास्सङ्कर्षणान्ताश्चाप्यनिरुद्धादयस्तु वै ।
समाक्रम्याध्वपट्कन्तु अध्वातीतन्तु बुद्धिग ॥२१६॥
समना आत्मतत्व च भाग्वदभ्येत्य मूर्तताम् ।
व्यापिका मूर्तयस्त्वेता पृथङ्मुक्तपरायणै ॥२१७॥
तदाकारैरसङ्ख्यैस्तु सवृता क्ष्मावनीषु च ।
प्राक्सख्यासु च तिष्ठन्ति सर्वास्सर्वासु सर्वदा ॥२१८॥
स्मृत्वा ह्यभेदभावेन षट्क मोदकवत्पुरा ।
शिखान्त क्ष्मादिना तेन सर्वं व्याप्त विचिन्तयेत् ॥११९॥
चतुरात्मानमव्यक्त शब्दमूर्ति निराकृतिम् ।
गुणमात्रैर्विभिन्न च ख च तत्रैव भावयेत् ॥२२०॥
अभ्याह्मणाथ वपुषा स्वम्वभावमयेन च ।

संकल्पेन तु वै बुद्धौ सर्वं समुदितेन तु ॥२२१॥
स्वशक्त्या वै ह्यनिच्छातो जीवमादाय सोर्ध्वगम् ।
स्वसामर्थ्यं स्वशक्त्या तच्छान्तरमात्ते विलाप्य च ॥२२२॥
शुद्धाशयानां भक्तानां तत्पदैकाभिलाषिणाम् ।
तत्सामर्थ्यानुविद्धानां सर्वत्र व्यक्तिमेति च ॥२२३॥
अतस्तु यद्यत्सवेद्यं हेयं परिमितन्त्वपि ।
तत्तदाश्रमनाभ्येति सर्वदा भावितात्मनाम् ॥२२४॥
इत्याद्यैः सर्वसामान्यो नित्यो विद्याख्य आश्रमः ।
बोद्धव्यः सोपि तदनु ह्यसामान्यतया गतः ॥२२५॥
आमोक्षादक्रमाद्वच जीवानां स्वयमेव हि ।
वज्रवत्सूक्ष्मरूपेण सपूज्येन महामते ॥२२६॥
दीक्षाकाले तु शिष्याणां परिज्ञेयं यथोदितम् ।

सौम्यवारुणईशाने यदि पूर्वदिगाननम् ।
तत्सिद्धिसूचकं विद्धि विपरीतमतोन्यथा ॥२३४॥
तत् ध्वमनाय जुहुयाद्वीर्यमन्त्रेण वै शतम् ।
धूपानुलेपनादीनि रजांसि घटिकादयः ॥२३५॥
साज्यानि च तिलादीनि योग्यान्यन्यानि लाङ्गलिन् ।
उद्धृत्योत्तरतः कृत्वा वर्मजप्तेन वाससा ॥२३६॥
अशुक्लेनाहतेनैव स्वाच्छाद्य सुसितेन च ।
समभ्यर्च्यास्त्रमन्त्रेण पुष्पधूपानुलेपनैः ॥२३७॥
क्षान्त्वा स्थलस्थितं देवमग्नौ वा कलशे न्यसेत् ।
अथ शुद्धे तु भूभागे ह्न्मन्त्रितकुशास्तरे ॥२३८॥
कृत्वा प्राङ्मस्तकं शिष्यं बलजप्तांशुकेन तु ।
हृदावकुण्ठिततनुं मुख्यमन्त्रमनुस्मरन् ॥२३९॥
स्वापयेत्स्वप्नलाभाय ततो हृन्मन्त्रितैस्तिलैः ।
सिद्धार्थकयुतैः तस्य निरुध्यात्परितो बहिः ॥२४०॥
सबर्हिपक्ष मन्त्रेण प्राग्वदिग्प्रष्टकं न्यसेत् ।
प्रदक्षिणेन तत्रापि सितसूत्रेण वर्मणा ॥२४१॥
चतुर्धा वेष्टयित्वा तु मण्टपान्निष्क्रमेद्बहिः ।
दन्तकाष्ठादिकं कर्म विनिष्पाद्य स्वयं स्वपेत् ॥२४२॥
कुतपे दर्भशय्यायां कृत्वा दक्षिणतश्शिरः ।
सस्पृशेत्स्वाङ्घ्रियुग्मेन शिशुं शयनसंस्थितम् ॥२४३॥
भगवन्तं हि मनसा प्रार्थयन्नपवर्गदम् ।
ओमादीश जगन्नाथ सर्वज्ञ हृदयेशय ॥२४४॥
तत्राहं योजयाम्येन सत्कर्म त्वत्परायणम् ।
प्रासानुज्ञस्तु शिष्याणां कुर्याद्वै तत्र योजनम् ॥२४५॥
यत्र यत्र च तत्तेषामवश्यं शाश्वतं भवेत् ।

इत्थं दीक्षाधिवासस्य विधानं सम्प्रकीर्तितम् ॥२४६॥
एकानेकस्वरूपा तु दीक्षेदानीं प्रकीर्त्यते ।
आसाद्य या समायान्ति देहान्तेऽभिमतं पदम् ॥२४७॥
कैवल्यफलदा चैका भोगकैवल्यदा परा ।
भोगदैव तृतीया च प्रबुद्धाना सदैव हि ॥२४८॥
आचार्यानुमता सर्वा कार्या. सम्यक् फलाप्तये ।
भक्तिभावानुविद्धाना शिष्याणा भविनां तु वै ॥२४९॥
वृद्धानामङ्गनाना च बालाना भावितात्मनाम् ।
विनाचारसमूहेन तु शक्तेन च ता हिताः ॥२५०॥
पुरा धिया विचार्यैवमुपसङ्गेन वै सह ।
तदीयमाशय ज्ञात्वा सम्यग्वैश्च महामते । ॥२५१॥
गयार्तातैर्यगश्च नु उत्थाय शयनाद्गुरु. ।
कमण्डलु समादाय बहिर्गत्वा सविशेत् ॥२५२॥
सम्योदमतश्चास्य हुतभुग्राशिमसिभम् ।
तदन्तमाविशेदेव स्नान मान कृत भवेत् ॥२५३॥
निद्रामोक्षम येन शधदायानि सद्क्षयम् ।
गद्कुन्धे परिधागृश्च स्नाम्यस्वरेण तु ॥२५४॥
समादाय च संस्कृत्य निर्मिथ्यार्थसंहितेन ।
सुन्धगोमयमन्पृष्टे मन्त्र... सतुर्गोदिनम् ॥२५५॥
भन्दनदिवियाये स्थगा फेोनप शक्व ।

शिष्यमादाय सम्बोध्य स्वप्नप्राप्तिं शुभाशुभाम् ।
चतुर्मूर्तिसमूहं तु यथादिक्संस्थितं तु वै ॥२५९॥
पश्येत्पङ्क्तिनिविष्टं च उपविष्टं तु चोत्थितम् ।
तन्मध्याद्भगवत्तत्त्वमेकं वा भिन्नलक्षणम् ॥२६०॥
प्रादुर्भावसमूहं च तल्लाञ्छनगणश्च यः ।
देवीयं वनितावृन्दं सर्वमेकत्तमाथ वा ॥२६१॥
भवोपकरणव्रातमशेषं वा पृथक्स्थितम् ।
रुद्रेन्द्रचन्द्रसूर्याम्बुहुतभुग्वातलक्षणम् ॥२६२॥
पञ्चरात्रविदो विप्रा आराधनपरायणाः ।
त्रयीमुद्घोषयन्तश्च निगदन्तश्च वा द्विजाः ॥२६३॥
यतयः शुद्धसत्त्वाश्च सद्ब्रह्मपदसंस्थिताः ।
नगस्रक्चन्दनाद्यानि सुगन्धानि तरूत्तम ॥२६४॥
उद्यानवनितारामवापीहर्म्यं महालया ।
फलबीजौषधीसाम्बुकुम्भो वा पाकनिर्गतः ॥२६५॥
गोगजाश्वनदीयानं कन्या सालङ्कृता शिशुः ।
मङ्गल्यगीतिमधुरा भेरी वंशश्च वल्लरी ॥२६६॥
समारसं सरः पद्मैः पूर्णं छत्रं सितं ततम् ।
हेमादिधातवो रत्नजालं गोसम्भवानि च ॥२६७॥
नवो नेत्रचयश्शुक्रः वस्त्रवृन्दमनाहतम् ।
राजापुरोधाः सामन्तो राजपत्नी च दर्पणम् ॥२६८॥
तुषारपातमद्वृष्टिमहामेघोदयो दिवि ।
शोणितं चार्द्रमांसानि स्वप्लुतिर्मादिरादयः ॥२६९॥
सत्पक्षिमृगमपातमुरार्चा चामरं सितम् ।
एवमादीनि चान्यानि विद्धि सिद्धिप्रदानि च ॥२७०॥
स्वप्नानि यान्यनिष्टानि तानि मे ऽद्यतश्शृणु ।

म्लानता क्षितिकम्पश्च उपरागोतिभीषणः ॥२७१॥
नीहार उल्कापातश्च निर्घातश्चिवभङ्गकृत् ।
गर्तप्रवेशो दध्यन्नं स्विन्नमांसस्य भक्षणम् ॥२७२॥
नर्तनं रथविध्वम आज्य म्याङ्ग॰द्विजच्युतिः ।
खरोष्ट्रं चोत्कटं हास्य कपिऋक्षाकुलं वनम् ॥२७३॥
स्नानं धूमाकुलं दग्धमसितांबरवेष्टितम् ।
शुष्कत्व सरिदादीना प्रतिस्रोतस्त्वमेव च ॥२७४॥
पोतयान ध्वजच्छत्रतरुभङ्गोप्यसिद्धिकृत् ।
अवतारो नगाद्वृक्षाभ्रमत्वं प्रेतदर्शनम् ॥२७५॥
वचाकुज्जलैर्नाज्यलेपोसरकर्दमे स्थितिः ।
महिषोहिर्नर कृष्णो दक्षिणाशागमः क्षुधा ॥२७६॥
लुण्ठनं नखकेशानामस्थिभङ्गापिकाद्रतम् ।
एवमादीनि चान्यानि अशुभानि महागते ॥२७७॥
मासे शुभाशुभे स्वप्नेप्यभिमन्धाय वै हृदि ।
औत्सुक्यादशिवघ्नानि पूजाहोम समाचरेत् ॥२७८॥
यथोक्तविधिना देवमवतार्य क्रमाद्यजेत् ।

ताप पुण्ड्रस्तथा नाम मन्त्रो यागश्च पचम ।
तत्र तापविधान तु शृणुध्व मुनिपुङ्गवा ॥२८४॥
आचार्यो वैष्णवान् सभ्यान् पूज्य तेषामनुज्ञया ।
गत्वा कुण्डसमीप तु शिष्येण सहितो गुरु ॥२८५॥
चक्रशङ्खौ समभ्यर्च्य तत्तन्मन्त्रै प्रतिष्ठितौ ।
पूर्वं स्वगुरुणा दत्तौ स्वदीक्षावसरे द्विजा ॥२८६॥
मूलमन्त्रेण जुहुयाच्छतमष्टोत्तर घृतै ।
वैष्णव्या चापि गायत्र्या तद्विष्णोरिति वै ऋचा ॥२८७॥
तत कुण्डानले चक्रशङ्खौ निक्षिप्य पूजयेत् ।
ततस्तु चक्रमन्त्रेण शङ्खमन्त्रेण च द्विजा ॥२८८॥
हुत्वा चाष्टोत्तरशत अष्टाविंशतिमेव वा ।
पवित्रन्तेति मन्त्रेण प्र ते विष्णो इति त्वृचा ॥२८९॥
हुत्वा ततस्तु देवेश ध्यात्वा गुरुपरम्पराम् ।
शिष्यस्य दक्षिण बाहुमूल चक्रेण चाङ्कयेत् ॥२९०॥
शङ्खेन प्रतपेत्सव्यबाहुमूल मुनीश्वरा ।
ततश्चक्र च शङ्ख च अभिषिच्य स्वमन्त्रत ॥२९१॥
सपूज्य मूलमन्त्रेण हुनेत्पूर्णाहुतिं द्विजा ।
ततस्तु चोर्ध्वपुण्ड्राणि धारयेन्मुनिपुङ्गवा ॥२९२॥
तद्विधान प्रवक्ष्यामि शृणुध्व सावधानत ।
गृहीत्वा वैष्णवक्षेत्राद्विमला श्वेतमृत्तिकाम् ॥२९३॥
हस्तौ प्रक्षाल्य चाचम्य प्राङ्मुख वाप्युदङ्मुखम् ।
उपविश्यासने शुद्धे वामहस्ततले द्विजा ॥२९४॥
सक्षाल्य पात्रमन्त्रेण तत्र वै श्वेतमृत्तिकाम् ।
प्रणवेन तु विन्यस्य गन्धद्वारेति ता मृदम् ॥२९५॥
जलेन सेचयित्वाथ कृत्वा दिग्बन्धन द्विजा ।

मूलमन्त्रेणाभिमन्त्र्य वामहस्तस्थितां मृदम् ॥२९६॥
तन्मध्ये नारसिंहस्य बीजमालिख्य मन्त्रवित् ।
अङ्गुल्या मृदमादाय ललाटादिषु धारयेत् ॥२९७॥
पुष्टिप्रदेनाङ्गुष्ठेन तर्जिन्या मुक्तिसिद्धये ।
वाञ्छितार्थप्रदायिन्या तथा नामिकयाथ वा ॥२९८॥
आयुष्कामी मध्यमया चांगुल्या च मुनीश्वरा ! ।
एताभिरंगुलीभिस्तु धारयेन्न नखैः स्पृशेत् ॥२९९॥
ऊर्ध्वपुण्ड्रमृजुं रम्य विष्णोः पादद्वयाकृतिम् ।
सान्तरालं सुपार्श्वं च द्व्यङ्गुलं त्र्यङ्गुलं वा ॥३००॥
विस्तीर्णमथ चायामे चतुरङ्गुलसम्मितम् ।
ललाटेधारयेत्कुक्षौ चतुरङ्गुलविस्तृतम् ॥३०१॥
अष्टाङ्गुलायतं यद्वा प्रादेशपरिसम्मितम् ।
धारयेदूर्ध्वपुण्ड्रं तु तावन्मानसमन्वितम् ॥३०२॥
ऊर्ध्वपुण्ड्रं तु हृदये धारयेल्लक्षणान्वितम् ।
ततस्त्र्यंगुलविस्तीर्णं चतुरंगुलमायतम् ॥३०३॥
ऊर्ध्वपुण्ड्रं कण्ठदेशे ततो वै दक्षिणोदरे ।
ऊर्ध्वपुण्ड्रं तु पूर्वोक्तकुक्षिपुण्ड्रसमं द्विजा ! ॥३०४॥
ततस्तु दक्षिणे बाहुमध्ये त्वष्टांगुलायतम् ।
चतुरंगुलविस्तीर्णमूर्ध्वपुण्ड्रं तु धारयेत् ॥३०५॥
ततस्तु दक्षिणांसे तु कण्ठपुण्ड्रसमं भवेत् ।
वामकुक्षौ तूर्ध्वपुण्ड्रं कुक्षिपुण्ड्रसमं भवेत् ॥३०६॥
वामबाहौ भवेत्पुण्ड्रं दक्षबाहूक्तलक्षणम् ।
वामांसे तु ततः पुण्ड्रं कण्ठपुण्ड्रसमं भवेत् ॥३०७॥
पृष्ठे त्वष्टांगुलायामं चतुरंगुलविस्तृतम् ।
ऊर्ध्वपुण्ड्रं ककुद्देशे चतुरंगुलमायतम् ॥३०८॥

तथा ऽङ्गुलविस्तारं धारयेन्मुनिपुङ्गवा!।
एवं द्वादश पुण्ड्राणि धृत्वा चैव यथाक्रमम् ॥२०९॥
हस्तक्षालनतोयं तु मूर्ध्नि संप्रोक्षयेत् द्विजा!।
ततस्तु चोर्ध्वपुण्ड्राणां मध्ये विष्णुसमर्पितम् ॥२१०॥
धारयेद्रजनीचूर्णं लक्ष्मीसान्निध्यसिद्धये।
वर्तिदीपाकृतिं चैव वेणुपत्राकृतिं तु वा ॥२११॥
एवं धृते ह्यूर्ध्वपुण्ड्रे लक्ष्म्या सार्धं जगत्पतिः।
क्रीडते सततं तत्र ततो बद्धाञ्जलिर्द्विजा!॥२१२॥
नामभिः केशवादीनां तदर्थध्यानपूर्वकम्।
तत्तच्छक्तिसमेतांस्तु केशवादीन् स्मरेद्बुधः ॥२१३॥
ललाटे केशवं ध्यायेन्नारायणमथोदरे।
माधवं हृदये चैव गोविन्दं कण्ठकूबरे ॥२१४॥
उदरे दक्षिणे पार्श्वे विष्णुं ध्यायेन्मुनीश्वरा!।
तत्पार्श्वे बाहुमध्ये तु चिन्तयेन्मधुसूदनम् ॥२१५॥
त्रिविक्रमन्तु तत्स्कन्धे वामकुक्षौ तु वामनम्।
श्रीधरं वामबाहौ तु हृषीकेशं तदंसके ॥२१६॥
अपरे पद्मनाभं तु त्रिके दामोदरं स्मरेत्।
इत्येवमूर्ध्वपुण्ड्रस्य विधानं सुसमर्कीर्तितम् ॥२१७॥
एवं शिष्यस्योर्ध्वपुण्ड्रं धारयित्वा यथा विधि।
नाम कुर्याच्च शिष्यस्य तद्विधानमिहोच्यते ॥२१८॥
तमादाय कराद्देवधामसान्निकटं मनेन।
कृत्वात्मनो वामभागे भूयः सद्याद्य लोचने ॥२१९॥
प्रक्षेपयेदिमां सार्ध्यमञ्जलिं मुकुलोचनं।
सम्पदयेत्परमं धाम मान्समिच्छाफलप्रदम् ॥२२०॥
तस्मिन्नवसरे कुर्यान्नाम सम्यग् यथोचितम्।

रहस्यसज्ञं मुख्य च गौण वाम्य यथास्थितम् ॥३२१॥
सामान्य वासुदेवाय नाम स्वाद्वाह्मचतुर्ष्वपि ।
सर्वेषा सविशेष वा यथाचानुक्रमेण तु ॥३२२॥
द्विपदक्रमूर्त्यङ्कित च स्वाम्यन्त ब्राह्मणेषु च ।
देवान्त क्षत्रियाणा च कुर्याद्वादशधा पुन ॥३२३॥
पाण्यन्त धरनिष्ठ वा लाञ्छनाख्यपुरस्सरम् ।
ध्वजलाञ्छनसज्ञ च यथावस्र नृपेषु च ॥३२४॥
एव वर्धननिष्ठ च मूर्तिलाञ्छनपूर्वकम् ।
विहित चापि वैश्याना दासान्त शूद्रजन्मनाम् ॥३२५॥
अथोत्थाय नमस्कृत्य मण्डल कलश गुरुम् ।
यायात्कुण्डसमीप तु शिशुना सह देशिक ॥३२६॥
कृतस्य कर्मणोच्छिद्रसिद्धये च हुते सति ।
सन्ताप्यान्तात्मको भूत्वा मायवद्धृदय विशेत् ॥३२७॥
प्राणशक्तिवियुक्त च कृत्वाऽऽनीय समस्त ।
सम्प्रवेश्य स्वक स्थान तत्राग्निरणवश्च तत् ॥३२८॥
नीत्वा सम्यक्पृथग्भाव विरेच्य सह वायुना ।
स्वगुणौ वाममार्गेण दद्यात्त निरोधिनम् ॥३२९॥
जन्मसहमनेनैव मन्त्रयुक्तेन कर्मणा ।
भावध्यानानुविद्धेय विगृह्यानुसय त्यजेत् ॥३३०॥

वौषट्स्वाहावषट्कारनिष्ठाना तु प्रतिक्रिया।
नमस्कारेण मन्त्राणा कार्ये पात्रे ह्यनुगते ॥३३४॥
तदीयमर्घ्यपुष्पाद्य यत्किञ्चिद्यागसाधनम्।
सुसंस्कृतमसिद्ध वा भक्त्या कर्मण्यता व्रजेत् ॥३३५॥
अतोऽन्येषा तु भक्ताना विहिता यागसाधने।
सम्यक्सत्वनिवृत्ति प्राग्दर्शनप्रोक्षणान्वितम् ॥३३६॥
मूर्तौ वा मण्डलाग्रे तु पुष्पक्षेपं महामते।
नक्त वा परिपीड च भूतार्थं चैवमेव हि ॥३३७॥
एव संस्कारसंशुद्ध कृत्वा वर्णगण पुरा।
साङ्गेन विभुना कुर्यात्प्रायश्चित्ततर्पणम् ॥३३८॥
सदशार सहस्र तु यथा चानुक्रमेण तु।
गत्वा चाभ्यर्घ्यकुम्भेश सूत्रमादाय तत स्थितम् ॥३३९॥
ऋजुभूत शिशु कृत्वा तद्वत्सूत्र प्रसार्य च।
व्यक्तरूप च मन्त्रेश संस्मरेदग्निमध्यगम् ॥३४०॥
पश्येद्विभौ शिशु सूत्रे स्वात्मन्यध्यानमञ्जसा।
तत्राध्यात्मस्वरूप च सम्मरेन्मन्त्रदेहगम् ॥३४१॥
अधिदैवस्वभाव च तत्स्वात्मन्यवतार्य च।
अधिभूतमय सूत्रे त्रिविध शिष्यविग्रहे ॥३४२॥
मूलमन्त्रावसाने तु सनमस्क परात्मने।
पद कृत्वा तु जुहुयादाहुतीना चतुष्टयम् ॥३४३॥
तथा सूक्ष्मात्मने चोक्त्वा तत स्थूलात्मने तु वै।
सर्वात्मने च तदनु ततोऽध्वनिचय हितम् ॥३४४॥
आ पादाग्राच्छिरोन्त च सर्वं ध्यात्वा स्वदेहगम्।
यथोद्दिष्टक्रमेणैव विभिन्न त्रिविध त्वपि ॥३४५॥
रचना सन्निवेशो य क्ष्मादीना चाधिभूतता।

भूय सस्रष्टियोगेन द्विषट्कपरिसंख्यया ।
पूरकेन समाकृष्य शिष्य हृत्कमलाद्धृदि ॥३५९॥
अथ व्यक्तिनिरस्तच क्ष्माबीज वरलक्षणम् ।
भूशक्त्या ज्ञानसरुद्ध कृत्वाद्'यानलाद्धृदि ॥३६०॥
प्रणवासनविश्रान्त विरेच्याब्जे तु शैशवे ।
स्मृत्वाथ शिष्यचैतन्यमेकमेव द्विरूपधृत् ॥३६१॥
शक्तिमच्छक्तिभावेन शक्तित्वेन तु सस्मरेत् ।
क्ष्मातत्वान्तर्गत कुण्डे शक्तिमत्वेन तत्पुन ॥३६२॥
रचयित्वा स्वसाम्रा च विग्रहे मध्यवर्मना ।
*नियोज्य तत्समाधौ तु जपध्यानैकलक्षणे ॥३६३॥*
तदेव पार्थिव बीज हृदा वै होमकर्मणा ।
सम्यक्तस्योपकारार्थं नेतव्य सूक्ष्मदेहताम् ॥३६४॥
स्वाहान्त भोगसिध्यर्थं नमोन्त मोक्षसिद्धये ।
भोगमोक्षाप्तये वापि तदेवोभयलक्षणम् ॥३६५॥
कर्मणामवसाने तु सपाद्यमपद न्यसेत् ।
एव तद्विग्रहे सूक्ष्मे तद्धृदयाग्रतस्य च ॥३६६॥
शिरसा चाधिकार तु तस्यापाद्य यथास्थितम् ।
शिखामन्त्रेण तद्भग निर्वर्त्य शतसख्यया ॥३६७॥
वर्मणा तत्फलप्राप्ति तल्लयत्वमपि स्मरेत् ।
स्वतृप्तिमयनेत्रेण कुर्यात्तेनैव तत्स्थितम् ॥३६८॥
तत्त्यागश्चास्त्रमन्त्रेण विश्लेषेण यतो भवेत् ।
मूलेनाथ गृहीत्वा तत्कुर्याच्चैवात्मसात्पुन ॥३६९॥
तद्वच्छक्तिं तदीया च कुण्डाद्व्यापकलक्षणाम् ।
क्ष्मातत्वस्याथ साम्यस्य ह्याधारस्य धान्मदे ॥३७०॥
पूर्वसख्य तु चास्त्रेण कृत्वा होम महामते ! ।

स्रुवमाज्येन सम्पूर्य स्कन्दसूत्रात्तु पार्थिवम् ॥२७१॥
विसर्ज्य पूर्णया सार्धं विलाप्याग्नौ स्वके पदे ।
मूलमन्त्रेण सहसा हृत्पद्मे प्रेरितेन तु ॥२७२॥
स्वदेहाद्रेचकेनाथ प्रेर्य शक्तिं च शैश्वरीम् ।
तयाक्रान्तमवस्य च सरमेरव्यतिरिक्तया ॥२७३॥
कमिन्दुनो बाब्जपत्रमाधाध्वान च भौवनम् ।
शिष्यदेहे निरुद्धस्य व्यक्तिक्रोडीकृतस्य च ॥२७४॥
स्वशक्तिपरिपूर्णस्य क्ष्माबीजस्य त्वथोपरि ।
विरेच्यशक्तिमन्त च व्यस्तधर्मेण पूर्ववत् ॥२७५॥
तत्क्षणेबीजसस्य तु अध्वान तु यथास्थितम् ।
प्रकाशयन्त कृपया तन्नाथन्तस्य सिद्धये ॥२७६॥
विरक्त भावयेच्छिष्य चिन्मयन्तमिद धिया ।
इद तत्पार्थिव तत्त्व मुधा वै दु खपञ्जरम् ॥२७७॥
भावतत्त्वगत चास्य सुसहत्त्व च साम्प्रतम् ।
कथमत्र त्वह चास यस्य मे न तता इमा ॥२७८॥
विमुक्त पञ्जराद्बद्धसुखमासे विहङ्गम ।
ऊर्ध्वगाती तदारूढस्त्वेव मन्त्रबलाच्छिशु ॥२७९॥
समूहमथ विज्ञाप्य तत्प्रभुन्चेन यत्स्थित ।
सन्निरुद्धो भवेत्त्वस्य सन्ति सर्वदेव हि ॥२८०॥
युष्मत्प्रसादसामर्थ्याद्यथावत्साधितो गुण ।
देहान्त गम्यतान्मात्र भवेदासीनमस्य वै ॥२८१॥
सम्यक्सम्प्रतिपन्नस्य शासने पारमेश्वरे ।
ह परापिते नाथ ! भस्मादप्रभृति त्वया ॥२८२॥
भगाय मोक्षविघ्नाना भवितव्यध्य कर्मण ।
इति विज्ञाप्य चाज्ञाप्य आयाधाऽनय क्रमात् ॥२८३॥

सह शक्त्या समाकृष्य भूयस्तत्पूरकेण तु ।
तद्देहे चाम्मय बीज साधार पूर्ववन्न्यसेत् ॥३८४॥
कुण्डमध्ये तु सन्धाय जीवशक्तिं च पूर्ववत् ।
विरेच्य शक्तिमात्मान नियोज्य तदनन्तरम् ॥३८५॥
तत्समाधौ यथापूर्वं कुम्भकेन महामते ! ।
अथाप्य देहमासाद्य होमध्यानादिना परम् ॥३८६॥
तत्राधिकारपूर्वं तु सर्वं निर्वर्त्य तस्य वै ।
आप्येन सूत्रस्कन्धेन सह पूर्णां निपात्य च ॥३८७॥
अप्तत्व पदसयुक्त तेनाक्रान्त स्मरेत्तथा ।
तत्स्थ मन्त्रसमूह तु सह तत्पतिना तु वै ॥३८८॥
पूर्ववच्छ्रावयित्वा च रसमज्ञाप्य गन्धवत् ।
मनोवसान नीत्वैव त वर्णाध्वोर्ध्वगोचरम् ॥३८९॥
निष्ठाङ्गेन महाबुद्धे ! तेजसाख्येण चेच्छया ।
समुद्धृत्याथ वै प्राग्वद्योक्त्य बुद्धिगोचरे ॥३९०॥
षडध्वमुक्त मूलेन प्राप्तसज्ञ च त शिशुम् ।
तत्वकञ्चुकनिर्मुक्त शान्तात्मन्येकता गतम् ॥३९१॥
स्मृत्वा शक्त्यात्मनाग्नौ तु लब्धलक्ष परे पदे ।
ऐश्वरेण तु बीजेन प्रोक्तसत्वान्वितेन च ॥३९२॥
तत सवेद्य निर्मुक्ते समाधौ विनियोज्य च ।
न वेत्ति यत्र सलीन स्वानन्द द्वैतमात्रकम् ॥३९३॥
आहुतीना शत हुत्वा तदापादनकर्मणि ।
नीत्वा समानता सर्वं तेनैव स्वधियाखिलम् ॥३९४॥
सह सवेद्यजालेन वाक्प्रबन्ध यथास्थितम् ।
निस्तरङ्गमयो भूत्वा दद्यात्पूर्णाहुतिं पराम् ॥३९५॥
अथाग्निता प्राप्य गुरु प्रदद्यादाहुतिं पुन ।

बीजनाथेन शिष्यस्य स्वपमोक्षनिवृत्तये ॥३९६॥
पदेरोङ्कारसरुद्धै पदावस्थितमानस ।
सर्वज्ञो भव चोक्त्वैव जुहुयाद्द्वादशाहुतिम् ॥३९७॥
सर्वैवमेवभगवान्निरवद्यो निराश्रय ।
सर्वेश्वर सर्वशक्ति सुसम्पूर्णोऽच्युतो हरि ॥३९८॥
व्यापी निरद्धषाड्गुण्यो निर्विकारो निरजन ।
नित्यो नित्योदितोऽनूनो नित्यानन्द सुनिष्कळ ॥३९९॥
अनाद्यन्तो ह्यनिमनो वासुदेवो विभूतिमान् ।
हुत्वैव न तत कुर्यात्पूर्णया पुनरेव हि ॥४००॥
स्थिता वैभवदीक्षाया मुमुक्षोरैश्वरे पदे ।
यशसो धाम चाभ्येति ह्यचिरात्परमेश्वरम् ॥४०१॥
ईश्वरेच्छावशेनैव देहपातान्महामते ! ।
भोगेच्छो पद्मनाभीय उभयत्मो पदद्वये ॥४०२॥
शक्तिमच्छक्तियोगेन त्वथ बुद्धिमयेऽध्वनि ।
निर्देश्यो देहपातन्त कालमुद्धृत्य तत्पदात् ॥४०३॥
अन्तर्गूढो यथा काष्ठान्वावरश्च पृथक्कृत ।
न भूय सह काष्ठेन साम्यमेति तथा पुमान् ॥४०४॥
[illegible] नैति तन्मयता तत ।
[illegible] ॥४०५॥
[illegible] न गिता[illegible] ।
[illegible] ॥४०६॥
[illegible] ।
[illegible] ॥४०७॥
[illegible] ।
[illegible]

पृथग्वर्णात्मना याति स्थितये न तथा स्वयम् ।
नो यान्ति निश्चय यत्र चातुरात्म्यादनुग्रहात् ॥४०९॥
ऋते वेदविदो विप्रास्त्वेतस्मिन् प्रथमेक्षरे ।
स शब्दमूर्तिर्भगवानभ्येति च कलात्मना ॥४१०॥
तद्गृहो युज्यते येन तन्निष्ठाना हि कर्मणा ।
न षाड्गुण्यकलोत्था च यावन्मूर्तिर्निरञ्जना ॥४११॥
त्वद् केनान्यथा मूर्तै तद्गृहीतु नियुज्यते ।
तत्वा· कलामया सर्वे प्रभवाप्ययलक्षणा ॥४१२॥
पूर्वोक्ता वासुदेवाद्या अच्युतान्ता यथोदिता ।
तत्वेभ्यो निर्गता मन्त्रास्त्वणिमादिगुणैर्युता ॥४१३॥
षट्कलागलैर्युक्ता येषु सख्या न विद्यते ।
व्यञ्जिता तैस्त्वनिर्माण तुर्याद्य पदसञ्ज्ञकम् ॥४१४॥
कर्मणामात्मलाभार्थं मोहार्थं तत्क्षयाय च ।
द्विसप्तभुवन विश्व गुणत्रयमय हि यत ॥४१५॥
तदशुद्ध जड नित्य भोग्यं व्याप्य पृथक्स्थितम् ।
इत्यध्वषट्कमुद्दिष्ट हेयोपादेयलक्षणम् ॥४१६॥
भुवनाध्वा पदाध्वा च विना तुर्यपदेन तु ।
हेयशेषमुपादेय कर्मणा तदपेक्षया ॥४१७॥
व्यपेक्षयाप्युपेयश्च हेयपक्षे प्रयाति च ।
किं तु तत्राप्युपाय वै निस्तरङ्गे परे पदे ॥४१८॥
विवेकपदसस्थस्य दीक्षया सस्कृतस्य च ।
विचार्यमाण एव हि विश्रमो यत्र वै स्फुटम् ॥४१९॥
जायते तत्पर ब्रह्म वासुदेवाख्यमव्ययम् ।
अम्बर परमाणूना शुद्धानामास्पद यथा ॥४२०॥
तथा चाद्य प्रबुद्धाना जीवाना हि निकेतनम् ।

विज्ञेय भुवनाना च पदानामन्तर हि यत् ॥४२१॥
येनेश्वरेच्छया तेषा मन्त्रा वै क्रीडयन्ति च ।
मायीयेध्वद्वये तस्मिन् सुखदु खमये फले ॥४२२॥
ईश्वरेच्छानुविद्धाना भक्ताना परमेश्वरे ।
गुरूणा दीक्षिताना चाप्याराधनरतात्मनाम् ॥४२३॥
भवन्त्यध्वद्वयोर्ध्वस्था मन्त्राश्चाज्ञाप्रतीक्षका ।
नयन्ति कर्मिण सम्यङ्मायायोध्वद्वयाद्बलात् ॥४२४॥
स्वस्थानमणिमादीना भोगाना प्राप्तये तु वै ।
विरक्तस्य च तद्भोगात्स्वशक्तया प्रेरयन्ति च ॥४२५॥
स्वव्यापारवशेनापि तत्वाध्वन्यमृतोपमे ।
यत्राणिमादिर्मन्येत तृणानीव च संस्थित ॥४२६॥
अनुग्रहपरास्तस्य तत्वाध्यक्षादयोमला ।
नयन्त्यप्ययता सम्यक्सकलाध्वनि शाश्वते ॥४२७॥
स षाड्गुण्यमयो ब्रह्म वासुदेवोऽध्वमूर्तिभृत् ।
नित्ये स्वात्मनि सम्बन्धे शब्दब्रह्माभिधेध्वनि ॥४२८॥
करोति योजनान्तस्य यत्रस्थ स्वयमेव हि ।
प्राप्नोति तत्परिज्ञानात्सुशान्त भगवत्पदम् ॥४२९॥

सङ्कर्षण ।

देव' वर्णाध्वविज्ञान वद किंलक्षण मम ।
प्राप्नोति यत्परिज्ञानादध्वी सद्वासुदेवताम् ॥४३०॥

श्रीभगवान ।

पद्याध्वकोशभुवनस्य लब्धमन्त्रस्य चात्मन ।
सोऽनुभूतिपद याति परामन्नानन्दधृक् ॥४३१॥
भिन्नवर्णमय शब्द पूर्वलक्षणलक्षित ।
स पञ्चात्मनिबद्धे विज्ञेयो हि नरात्मना ॥४३२॥

प्रभवाप्ययYोगेन शब्दभास्वरलक्षण ।
सकारान्तस्त्वकाराच्च हकारादान्त एव हि ॥४३३॥
प्रभवेद्द्वादशान्तस्तु हकाराश्चतुरात्मनाम् ।
अकारस्त्वप्यये चैव तुल्यतातोनयो स्मृता ॥४३४॥
वर्णव्यूहसमूहेऽस्मिन् ज्ञेय ज्ञानसमाधिना ।
विश्राम उदयो व्याप्तिर्व्यक्तिराड्वासुदेवता ॥४३५॥
अत्रैकैका परिज्ञेया मूर्तिर्वै त्वेवमेव हि ।
युक्ता विश्रमपूर्वेण चतुष्केण समासत ॥४३६॥
दण्डवत्सन्निवेशेन संस्थिता ह्येवमेव हि ।
द्विषट्क धारणाना च द्वादशाद्यात्मलक्षणम् ॥४३७॥
सोपानभूत यत्क्रान्ता द्वादशान्त विशेत्परम् ।
नीत्वैव व्यक्तिभावेन हृत्पद्मोदरसस्थितम् ॥४३८॥

वर्णाध्वान दीक्षितस्य शब्दब्रह्मेति य स्थित ।
ससैन्य हुतभुग्भूमि प्रणीतेनोदकेन तु ॥४३९॥
सह शिष्येण चात्मान तेनैवाच्छिद्रसिद्धये ।
पूर्ववद्धूतिना कृत्वा लक्ष्म चाग्नि प्रणम्य च ॥४४०॥
समुत्थाय ततो यायाच्च गृहीत्वाच्युतालयम् ।
पूजयित्वा जगन्नाथ निवेद्य नियमाच्छिशो ॥४४१॥
सविशेषात्समासेन सान्तरान्योग्यतावशात् ।
यथावदुपदेष्टव्य ततस्तम्यार्चन हृदि ॥४४२॥
मुद्रासमन्वितो मन्त्रो न्यासध्यानपुरस्सर ।
इतिकर्तव्यता शास्त्रसङ्क्षिप्ता च सविस्तरा ॥४४३॥
तत्सम सन्ततत्वेन सर्वं कार्यं यथा स्थितम् ।
गुर्वर्चन तत कुर्यादात्मना च धनादिना ॥४४४॥
पूरयित्वाम्भसा पाणिमर्घ्यपात्रात्तु दक्षिणम् ।

पडङ्गमन्त्रसजपं क्षेत्रस्य तस्य मस्तके ॥४४५॥
मण्डल प्रणवेनाथ पाणौ सूर्यसम स्मरेत् ।
तत्राभिन्न न्यसेत्साङ्गदेवं देवतागणम् ॥४४६॥
कृत्वा विभाजितं दद्यात्साशिष तस्य मूर्धनि ।
यथोक्ता च यथाभीष्टा त्वचिरादेव पुत्रक ! ॥४४७॥
तवास्तु वैभवी सिद्धि मोक्षलक्ष्मीसमन्विता ।
इति वैभवदीक्षाया लक्षण समुदाहृतम् ॥४४८॥
तत्प्रयुक्तस्य सामान्य सर्वमन्त्रगणस्य च ।
येन येन हि मन्त्रेण दीक्षा कार्याथ कस्यचित् ॥४४९॥
तस्य तस्य तदीयाना पूर्वोद्दिष्टेन वर्त्मना ।
कार्योऽत्रावयवाना तु विनियोगो यथोदित ॥४५०॥
समूहवद्द्वादीना मूलान्ताना समाचरेत् ।
सह तत्त्वगणेनैव सर्वदाध्यात्मरूपताम् ॥४५१॥
सम्यग्गृह्य तत कुर्यात्माग्वदभ्यर्चनं तु वै ।
नेत्रकर्माणि हृद्बीज पश्चाङ्गाना विधीयते ॥४५२॥
निरङ्गाना तु मन्त्राणामङ्गमन्त्रोक्तकर्मणाम् ।
प्रणवो विनियोक्तव्य सह कर्मपदेन ॥४५३॥
सम्पाद्या विधिनानेन व्यूहदीक्षार्थिना तु सा ।
किंतु वै तत्र योक्तव्य प्रत्येकस्मिन् हि कर्मणि ॥४५४॥
चतुष्कं वासुदेवाद्य बीजाना तत्पुरोदितम् ।
एवमेवाद्यमन्त्रस्तु निश्शेष कर्मसग्रहे ॥४५५॥
योक्तव्यो ब्रह्मदीक्षाया पोढा भक्त्या च पूर्ववत् ।
स्वरूपेण यथावस्थमुकेष्ववसरेषु च ॥४५६॥
किं त्वेकवचनेनात्र देवाना प्रार्थना मता ।
योजना त्वधिवासोक्ता विज्ञातव्या समासत ॥४५७॥

नित्यदीक्षाद्वयस्यास्य नान्यन्मोक्षादृते फलम् ।
तत्रापि चातुरात्मीया दीक्षा प्राक्कमलेक्षण ! ॥४५८॥
बलाद्ददाति षाड्गुण्यभोगार्थि भावितात्मनाम् ।
फल स्रक्चन्दनादीना होमद्रव्यस्य चापि यत् ॥४५९॥
प्रकृत्या सहसाभ्येति विलय प्रचदीक्षया ।
एव दीक्षालय चापि दद्यादेकम्य वा क्रमात् ॥४६०॥
सर्वाराधनयोग्यत्वसिद्धये मुनिपुङ्गवा ! ।
यद्वाष्टाक्षरमन्त्रादौ व्यापकत्रितये द्विजा ! ॥४६१॥
एकेन सर्वसामान्य दीक्षा कुर्याद्यथाविधि ।
तेनाङ्गसहितेनैव सर्वकर्म समाचरेत् ॥४६२॥
तदापि विभवव्यूह परमन्त्रास्तथा द्विजा ! ।
शक्तिभूषणवाहाख्यमन्त्राश्चोपदिशेद्गुरु ॥४६३॥
इत्थ दीक्षाविधि सम्यक्कीर्तितो मुनिपुङ्गवा ! ।
अथ मण्डलदृष्टस्य शास्त्रज्ञस्य यथार्थत ॥४६४॥
समाराधनसक्तस्य पुत्रकत्व गतस्य च ।
सिद्ध्यर्थं सर्वमन्त्राणामधिकाराप्तये तु वा ॥४६५॥
तत्काल गुरुणा कार्यं यच्छिष्यस्याभिषेचनम् ।
भगवत्तन्त्रवेत्तृणा पञ्चकालरतात्मनाम् ॥४६६॥
संहितापारगाणा च आचार्याणा च सन्निधौ ।
यतीना चक्रलक्षाणा बोधकाना महात्मनाम् ॥४६७॥
देवस्य पुरत कुर्याच्चतुरश्र च मण्टपम् ।
सर्वोपकरणोपेत मध्ये भद्रासनान्वितम् ॥४६८॥
तस्मिन् पुर्यादनन्ताख्य सन्धानधाममनोहितम् ।
पूजयित्वार्घ्यपुष्पाद्यै ततो देवस्य सम्मुखम् ॥४६९॥
बद्धपद्मासन शिष्य तत्रारोप्य कृताञ्जलिम् ।

कान्ताभिर्गीयमानं तु स्तूयमानं च वन्दिभिः ॥४७०॥
शङ्खाद्यैर्ध्मायमानं तु पठ्यमानं तु मङ्गलैः ।
जप्यमानं परं मन्त्रं ध्यायमानमिवाच्युतम् ॥४७१॥
अष्टाङ्गेनार्चयित्वा तु कुम्भमादाय वैष्णवम् ।
स तन्त्रसेन मन्त्रेण सम्यक्सिद्धिव्यपेक्षया ॥४७२॥
सहस्रावर्तितं कृत्वा शतावर्तितमेव वा ।
सिद्धये द्रुतहेमाभं स्मृत्वा तमभिषिच्य च ॥४७३॥
स्वाहान्तं मन्त्रमुच्चार्य प्लुतं हृत्कमलोदरात् ।
एवमुक्त्वा नमोन्तस्तु ध्यात्वा तं स्फटिकामलम् ॥४७४॥
समुत्कीर्य स्वरन्ध्रेण तस्य हृत्पद्मगं स्मरेत् ।
अशक्तिविग्रहं ब्रह्म स्वाह्लादानन्दलक्षणम् ॥४७५॥
समारोप्य धिया सम्यक् स्वाधिकारं तु चाखिलम् ।
समासाद्यार्चितशुद्धं दिव्यमागमसञ्चयम् ॥४७६॥
शुभमाराधनाधारमक्षसूत्रं च किङ्किणीम् ।
स्रुकस्रुवौ योगपट्टं च शङ्खचक्रं कमण्डलुम् ॥४७७॥
चमसं कुसुमञ्चार्घ्यपात्रं कृष्णाजिनं ततः ।
पादुके पादपीठं च छत्रमासनदर्पणम् ॥४७८॥
मयूरव्यजनं शुक्लं चामरं भगवद्ध्वजम् ।
दयार्हदण्डसहितं काषायं क्षौमवाससी ॥४७९॥
समुत्थाप्यासनात्सर्वमाहृत्य स्नानं जलम् ।
विनिक्षिप्य शुचौ स्थाने देवमभ्यर्च्य वै ततः ॥४८०॥
तादर्थ्येन तु सन्तर्प्य पूर्णान्तं चाग्निमध्यगम् ।
क्षान्त्वा पूर्वोक्तविधिना सकुण्डान् मण्डलान्तरात् ॥४८१॥
अर्घ्यपात्रसमूहाच्च बलिदानं समाचरेत् ।
सोदकेन च भूतानामोदनेनास्त्रमुच्चरन् ॥४८२॥

चलिमण्डलकं कृत्वा यागागागञ्च बाह्यत ।
कृतवान्तर्बलिदान तु प्रादक्षिण्येन वै पुरा ॥४८३॥
अथ ऊर्ध्वे इद बाकमा शेष तन्मण्डले दहि ।
नमोस्त्वच्युतभूतेभ्य सर्वेभ्य सर्वदेव हि ॥४८४॥
स दिक्पतिभ्य सास्त्रेभ्य शान्तये स्वस्य चै शिशो ।
पूजायमुगसहत्य दत्तशिष्टेण पूर्ववत् ॥४८५॥
वृत्तमण्डलमध्ये तु सितपद्मोदरे तत ।
दत्तशिष्टैर्यजेद्देव सर्वदेवगुरु प्रभुम् ॥४८६॥
तर्पयित्वाग्निमध्ये तु कुर्यात्तस्य विसर्जनम् ।
*तदीयमथ निक्षिप्य स्नापटे नवा जलान्तरे ॥४८७॥*
यागावनौ च तचक्र द्वादशार विचिन्त्य च ।
न्यस्यास्मन्यर्घपुष्पाद्यै समभ्यर्च्य तदन्तरे ॥४८८॥
करक वारिसम्पूर्णमादाय विनिवेद्य च ।
तत्रेष्ट्वा वीर्यमन्त्रेण मध्ये मन्त्रास्त्रमुत्तमम् ॥४८९॥
मन्त्राम्बुपयसा पूर्णमपर शुभलक्षणम् ।
तदग्रतोर्घ्यऽकलश तन्मार्गेण च चक्रगम् ॥४९०॥
तदभ्यर्च्य यथान्याय द्वादशशतमन्त्रितम् ।
वषट्पदनिरुद्धेन मूलमन्त्रेण त पुन ॥४९१॥
दद्यात्तदन्त सास्त्रेण प्राक्तनीयूषधारणाम् ।
निर्विर्भीकरण कुर्यात्सर्वेषा मन्त्रवारिणा ॥४९२॥
तदम्बुधारादानेन ध्यानोच्चारयुतेन च ।
सविमज्याय चैनेषा मन्त्रपान सुधामनघ ॥४९३॥
सम्पाद्यासनर पश्चात्तमन्ताच्च्रग न्यसेत् ।
आदाय तत्तोयकुम्भमस्त्रन्त्रमुदीरयन् ॥४९४॥
धारयेत्पूर्ववद्धारामथ मध्ये निधाय तम् ।

सुपूर्णमुदकेनैव कृत्वा फलसमन्वितम् ॥४९५॥
गुर्वागमत कुर्याच्छिष्य प्रयतमानस ।
भगवद्यागवद्भक्त्या कर्मणा मनसा गिरा ॥४९६॥
यागोपयुक्तसम्भार तस्मै सर्वं निवेद्य च ।
सशिर पाणियुग्म तु कृत्वा चैव तदग्रिगम् ॥४९७॥
प्रन्तव्य सुप्रसन्नेन श्रद्धापूतेन चेतसा ।
पञ्चरात्रविदस्तद्वद्व्रतीश्च स्नातकादय ॥४९८॥
सम्पूज्य विधिवद्दद्यात्तेषाशक्त्या च दक्षिणाम् ।
सवाहनपरात्कालाल्लब्ध्वानुज्ञा तु गौरवीम् ॥४९९॥
भ्रातृभि सह चाश्नीयाद्बहुभि पूर्वदीक्षितै ।
तथान्यैर्भगवद्भक्तै सुहृत्सम्बन्धिबान्धवै ॥५००॥
नवान्त सह शिष्यैस्तु काले ह्यन्यत्र तत्र वा ।
तदिच्छयाप्यनुग्रज्य निवर्तेताथ वै यदा ॥५०१॥
कृत्वा तु पादपतन बहुधा समदक्षिणम् ।
साक्षात्सर्वसिद्धीना भक्ताना भावितात्मनाम् ॥५०२॥
परा गतिर्गुरुर्यस्मात्प्रसादस्तत एव स ।
इत्येवमभिषिक्तस्तु भवेन्मुख्याधिकारिणाम् ॥५०३॥
स्वार्थे परार्थयजने उभयत्राधिकारिणाम् ।
अन्ये तु दीक्षामात्रेण सत्कार्या मुनिपुङ्गवा ! ॥५०४॥

मुनय ।

किं स्वार्थं च परार्थं किं के च तत्राधिकारिण ।
नंदन मुनिशार्दूल वदस्व वदता वर ॥५०५॥

नारद ।

स्वगृहे स्थापितो देव स्वार्थ इत्यभिधीयते ।
सर्वनामे नर्तनोर्गे सिन्धुतीरे ग्रामादिके ॥५०६॥

ग्रामे वा नगरे वापि स्वयव्यक्तादिभेदतः ।
संस्थितो भगवान् विप्राः! परार्थ इति कथ्यते ॥५०७॥
परार्थस्सूर्यसदृशः स्वार्थस्तु गृहदीपवत् ।
उत्कृष्टः परशब्दोयमर्थो मोक्षादिलक्षणः ॥५०८॥
यस्मात्तलभ्यते सोयं परार्थः परिकीर्तितः ।
स एव सर्वफलदः सर्वेषामपि यत् द्विजाः! ॥५०९॥
तस्मात्सर्वजनैः सेव्यः परार्थ.पुरुषोत्तमः ।
स्वार्थः स्वस्वगृहे पूज्यः स्वस्वाभीष्टफलप्रदः ॥५१०॥
स्वार्थस्यापि परार्थस्य पूजायामधिकारिणः ।
शाण्डिल्या ह्यन्वये जाता गुरोर्लब्धाभिषेचनाः ॥५११॥
अन्ये तु केवलं स्वार्थपूजने ह्यधिकारिणः ।

मुनयः ।

शाण्डिल्याद्यास्तु के योगिन् तद्वंश्या एव केवलम् ।
कथं परार्थयजने भवन्ति ह्यधिकारिणः ॥५१२॥
तत्सर्वं विस्तरेणैव ब्रूहि नो मुनिपुङ्गव! ।

नारदः ।

शाण्डिल्यादिमुनीन्द्राणां शृणुध्वं वैभवं द्विजाः! ।
पुरा कृतयुगस्यादौ वासुदेवः परः पुमान् ॥५१३॥
स्वाराधनार्थं भूलोके सद्धर्माणां प्रवृत्तये ।
लोकसंरक्षणार्थं च स्वस्य पञ्चायुधाधिपान् ॥५१४॥
समालोक्य भवन्तोद्य ह्यवतीर्य धरातले ।
आद्यमेकायनं वेदं मोक्षैकफललक्षणम् ॥५१५॥
प्रकाशयध्वं सर्वेषां सद्धर्मांश्च विशेषतः ।
तत्र तत्रावतीर्णं मां स्वयंव्यक्तादिभेदतः ॥५१६॥
संपूजयध्वं सर्वेषां मोक्षलाभाय भूतले ।

इत्यादिगत्तनस्ते वे निष्णोराज्ञानुवर्तिन ॥५१७॥
सुदर्शनाद्या देवीशा पञ्च मर्त्यपिरूपत ।
समुत्पन्ना क्षितितले पौण्ड्रूर्ध्वसगादिषु ॥५१८॥
पञ्चायुधास्ते पञ्च शाण्डिल्यश्चोपगायन ।
मौञ्जायन कौशिकश्च भारद्वाजश्च योगिन ॥५१९॥
ते मिलित्वा समालोच्य विष्णोराराधनेच्छया ।
अभिसगम्य तोताद्रौ तपश्चक्रुस्सुदुस्तरम् ॥५२०॥
तेषा तु तपसा तुष्टो वासुदेवो जगत्पति ।
लक्ष्म्या सार्धं खगेशानमधिरुह्य कृपानिधि ॥५२१॥
आजगाम गिरिश्रेष्ठ यत्र सन्ति मुनीश्वरा ।
ततस्ते मुनिशार्दूला दृष्ट्वागान्त जगत्पतिम् ॥५२२॥
शङ्खचक्राङ्कितकर कोटिसूर्यसमप्रभम् ।
पुलकाङ्कितसर्वांगा आनन्दाश्रुसमन्विता ॥५२३॥
प्रणर्तन्तस्तुवन्तश्च गायन्तश्च परस्परम् ।
प्रदक्षिण च कुर्वन्त प्रणेमु पुरुषोत्तमम् ॥५२४॥
आनन्दाम्बुधिसम्मग्नानेतान्वीक्ष्य श्रिय पति ।
उवाच करुण वाक्य मेघगम्भीरया गिरा ॥५२५॥

श्रीभगवान् ।

ऋषयस्तपसा युष्मत्तेनानन्यचेतसा ।
सतुष्टोऽस्मि प्रसन्नोस्मि वृणीध्वमभिवाञ्छितम् ॥५२६॥
इति तद्वचन श्रुत्वा ऋषयो हृष्टमानसा ।
बद्धाञ्जलिपुटा सर्वे प्रत्यूचुर्विनयान्विता ॥५२७॥
अधीता सकला वेदा शास्त्राणि विविधानि च ।
मोक्षोपाय न जानीमस्त्वत्तस्त्वा शरण गता ॥५२८॥
इदैवानुग्रह कर्तुमर्हसि त्व दयानिधे ।

इति संप्रार्थितो देवः करुणामृतवारिधिः ॥५२९॥
*तदानीमेव योगीन्द्रान् शाण्डिल्यादींस्तु दीक्षया।*
संस्कृत्य चाभिषिच्याथ स्वयमेव जगत्पतिः ॥५३०॥
आद्यमेकायनं वेदं रहस्याम्नायसंज्ञितम्।
दिव्यमन्त्रक्रियोपेतं मोक्षैकफललक्षणम् ॥५३१॥
पञ्चापि पृथगेकैकं दिवारात्रं जगत्प्रभुः।
अध्यापयामास यतस्ततस्तं मुनिपुङ्गवाः ॥५३२॥
शास्त्रं सर्वजनैर्लोके पञ्चरात्रमितीर्यते।
तदर्थांश्चोपदिश्याथ तानुवाचेदमच्युतः ॥५३३॥
एष एकायनो वेद उपदिष्टो मया द्विजाः!।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥५३४॥
तस्मादेकायनं चैनं प्रवदन्ति मनीषिणः।
एतदुक्तविधानेन दिव्यक्षेत्रादिषु स्थितम् ॥५३५॥
स्वयव्यक्तादिरूपेण यजध्वं मुनिपुङ्गवाः!।
स्वार्थे परार्थयजने यूयं मुख्याधिकारिणः ॥५३६॥
युष्मद्वंश्याश्च ये विप्राः! तेऽभिषिच्या यथाविधि।
तेऽपि स्वार्थे परार्थे च भवेयुरधिकारिणः ॥५३७॥
एष कार्तयुगो धर्मः प्रतिबुद्धैर्निषेवितः।
त्रेतादौ मन्दसञ्चारो भविष्यति मुनीश्वराः! ॥५३८॥
त्रेतायुगादौ सर्वेऽपि नानाकामसमन्विताः।
व्यामिश्रमार्जिनो भूत्वा त्यजन्त्याद्यं सनातनम् ॥५३९॥
अन्तर्दधाति सर्वोऽयं वेद एकायनाभिधः।
ततो योग्याय भगवान् प्रादुर्भावयति स्वयम् ॥५४०॥
इत्युक्त्वान्तर्दधे देवो वासुदेवः सनातनः।
तदा प्रभृति ते सर्वे शाण्डिल्याद्या मुनीश्वराः ॥५४१॥

आद्य भागवतं धर्ममादिभूते कृते युगे ।
अनुतिष्ठन्ति सर्वेपि मानवाश्च मुनीश्वरा ! ॥५४२॥
ततस्त्रेतायुगे जाते नानाकामयशाज्जना ।
त्यक्त्वा भागवत धर्मं बभूवुर्मिश्रयाजिन ॥५४३॥
ततश्चैकायनो वेदो मन्दचारो बभूव च ।
सदा मुनीन्द्र शाण्डिल्यो दृष्ट्वा कामरतान् जनान् ॥५४४॥
लोकसंरक्षणार्थाय तपस्तेपे सुदुस्तरम् ।
अनेकानि सहस्राणि वर्षाणां तपसोन्तत ॥५४५॥
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
साक्षात्सङ्कर्षणो देव प्राप्य प्रत्यक्षतां मुने ॥५४६॥
परित्यज्य परं धर्मं मिश्रधर्ममुपेयुषाम् ।
भूयस्तत्पदलक्ष्याणां श्रद्धाभक्ती उपेयुषाम् ॥५४७॥
अनुग्रहार्थं वर्णाना योग्यतापादनाय च ।
तथा जनानां सर्वेषामभीष्टफलसिद्धये ॥५४८॥
मूलवेदानुसारेण सारं सगृह्य सर्वत ।
अनुष्टुप्छन्दोबन्धेन प्रोक्तानि हरिणा स्वयम् ॥५४९॥
सात्वतादीनि शास्त्राणि भोगमोक्षप्रदानि च ।
उपदिश्याथ मुसली तत्रैवान्तरधीयत ॥५५०॥
लब्ध्वैव सात्वतादीनि शास्त्राणि मुनिपुङ्गवा ! ।
शाण्डिल्योऽध्यापयामास मुनिश्चैवौपगायनम् ॥५५१॥
तथा मौञ्ज्यायनादींश्च सनकाद्यांश्च योगिन ।
तत प्रभृति ते सर्वे शाण्डिल्याद्या मुनीश्वरा ॥५५२॥
सात्वताद्युक्तमार्गेण हरेराराधनादिकम् ।
कुर्वन्त स्वस्ववश्याश्च शिष्याश्चापि सहस्रश ॥५५३॥
काण्वीं शाखामधीयानान् वेदवेदान्तपारगान् ।

संस्कृत्य दीक्षया सम्यक्सात्वताद्युक्तमार्गतः ॥५५४॥
अभिषिच्य च तान् सर्वान् कृत्वा स्वार्थपरार्थयोः ।
पूजाधिकारिणो विप्रा ! तैरेतत्सात्वतादिकम् ॥५५५॥
शास्त्रं प्रवर्तयामासुस्ते हि मुख्याधिकारिणः ।
इत्युक्त्वा मुनिशार्दूलाः शाण्डिल्यादिमहात्मनाम् ॥५५६॥
माहात्म्यं लेशतो ह्यत्र अधिकारप्रसङ्गतः ।
एवं दीक्षा चाभिषेको यस्सिद्धान्तेन पूर्वतः ॥५५७॥
प्राप्तस्तेन मार्गेण कार्यो नान्योक्तमार्गतः ।
सिद्धान्तसङ्करं नैव कुर्याच्छास्त्रविशारदः ॥५५८॥

मुनयः ।

सिद्धान्तं नाम किं को वा भेदस्तस्य मुनीश्वर ! ।
तत्सर्वं विस्तरेणैव वदस्व वदतांवर ॥५५९॥

नारदः ।

चतुर्धा भेदभिन्नोयं पाञ्चरात्रस्य आगमः ।
पूर्वमागमसिद्धान्तं द्वितीयं मन्त्रसंज्ञितम् ॥५६०॥
तृतीयं तन्त्रमित्युक्तमन्यत्तन्त्रान्तरं भवेत् ।
आद्यं नित्योदितव्यूहस्थापनादिप्रकाशकम् ॥५६१॥
अपौरुषेयं सद्ब्रह्मवासुदेवाख्ययाजिनाम् ।
लक्ष्यभूतं द्विजेन्द्राणां ह्यदिलमधिकारिणाम् ॥५६२॥
ब्रह्मोपनिषदाख्यं च दिव्यमन्त्रक्रियान्वितम् ।
विवेकदं परं श्रावमनिच्छतोपवर्गदम् ॥५६३॥
एवं नित्योदिताख्यस्य नित्याकारस्य च प्रभोः ।
वासुदेवाभिधानस्य षाड्गुण्यादिगुणोदधेः ॥५६४॥
प्रथमं लक्षणं विद्धि हृदयाब्जगब्दवत् ।
एतदागमसिद्धान्तं मुनिरूपं तु विद्धि तत् ॥५६५॥

एष कालेयुगो धर्मस्सर्वधर्मोत्तम स्मृत ।
ततस्त्रेतायुगस्यादौ भोगमोक्षप्रसिद्धये ॥५६६॥
तत्र ह्यागमसिद्धान्तान्निस्सृत बहुभेदकम् ।
मन्त्रसिद्धान्तसञ्ज्ञ तज्जाग्रद्व्यूहादिमूर्तिना ॥५६७॥
समुदीर्ण द्वितीयस्य सात्वतस्य महात्मन ।
तेन प्रद्युम्नसञ्ज्ञस्य तेन तुर्यात्मनो विभो ॥५६८॥
तेन वागीश्वराख्यस्य तस्माद्दीपाख्यविग्रहे ।
सक्रान्त च तत पश्चाद्रुद्रेन्द्रादित्यवह्निषु ॥५६९॥
तथैव नारदाद्येषु देवताना गणेष्वपि ।
सक्रान्त मन्त्रसिद्धान्त भेदभिन्नमनेकधा ॥५७०॥
यत्र शान्ततर व्यूह शान्तोदितमनन्तरम् ।
सुषुप्तिसञ्ज्ञ स्वप्नाख्य जाग्रद्व्यूह यथोदितम् ॥५७१॥
मूर्त्यन्तर केशवाद्य प्रादुर्भाव तथान्तरम् ।
हृत्पद्मपद्मपीठादौ लक्ष्मीपुष्ट्यादिशक्तिभि ॥५७२॥
लाञ्छनैश्शङ्खचक्राद्यैर्गरुडप्रमुखैरपि ।
भूतसिद्धादिभि शास्तृपर्यन्तैर्यजन हितम् ॥५७३॥
विश्वाकृनृसिंहस्य दीक्षा पूर्व तथापरम् ।
विभवव्यूहसूक्ष्माख्यमधिकार यथाक्रमम् ॥५७४॥
सामर्थ्यपुत्रिकादीना चतुर्णामभिषेचनम् ।
तथैव समयाचार मूर्तीना स्थापनक्रमम् ॥५७५॥
मन्त्रमण्डलमुद्राणा कुण्डादीना च लक्षणम् ।
कर्मणामेवमादीना विधान यत्र पुष्कलम् ॥५७६॥
मन्त्रसिद्धान्तसञ्ज्ञ तद्बहुभेदसमन्वितम् ।
परव्यूहादिभेदेन विनैकैकेन मूर्तिना ॥५७७॥
साङ्गेन केवलेनाथ कालाव्यूहेन मुखेन ।

तथाजैर्विग्रहोपेतैरावृत तन्त्रसज्ञितम् ॥५७८
नृसिंहकपिलक्रोडहंसवागीश्वरादय ।
मुख्यानुवृत्तिभेदेन केवलापाङ्गसंयुता ॥५७९॥
चक्राद्यस्त्रवरैश्चाथ भूषणैर्मकुटादिभि ।
कान्तागणैश्च लक्ष्म्याद्यै परिवारै खगादिकै ॥५८०॥
पूजिता विधिना यत्र तत्तन्त्रान्तरमीरितम् ।
ये जन्मकोटिभि सिद्धास्तेषामन्तोत्र संस्थिति ॥५८१॥
यस्मात्तस्माद्विवेदैष सिद्धान्ताख्यो यथार्थत ।
शास्त्रमन्त्रक्रियादीना मूनीना नवनस्य च ॥५८२॥
देशिकस्याभिजातस्य यथापूर्व परिग्रह ।
तथैव यावत्काल तु नाचर्तव्य तदन्यथा ॥५८३॥
विपरीतकृते चात्र राजराष्ट्राद्यनर्थकृत् ।
ततस्सिद्धान्तसाङ्कर्य नाचर्तव्य कृतात्मभि ॥५८४॥
यद्यदिष्टतम लोके पूर्वसिद्धाविरोधि तत ।
प्रतिमात्रमतोन्योन्यविरुद्ध सन्त्यजेद् बुध ॥५८५॥
वैखानसेषु तन्त्रेषु शैवपाशुपतेषु च ।
विहितान्यत्र जातानि विरुद्धानीति किं पुन ॥५८६॥
एव सिद्धान्तभेदश्च कीर्तितोय यथाश्रुतम् ।
इतोन्यच्छ्रोतुमिच्छा चेत्कथ्यता मुनिपुङ्गवा ! ॥५८७॥

इति श्रीपाञ्चरात्रे ईश्वरसंहिताया

दीक्षाविधिर्नाम

एकविंशोध्यायः ।

—०—

## अथ द्वात्रिंशोऽध्यायः ।

मुनयः ।

नियमा उपदेष्टव्या शिष्यस्येति पुरा त्वया ।
प्रोक्तं हि मुनिशार्दूल! नियमांस्तान् प्रकाशय ॥१॥

नारद ।

एतदेव पुरा पृष्टो देवः सङ्कर्षणेन हि ।
प्रोवाच नियमांस्तांस्तु प्रवक्ष्यामि मुनीश्वराः ! ॥२॥

श्रीभगवान् ।

प्रत्येकस्मिन् हि नियमे निगते तु गुरोर्मुखात्
ब्रूयाद्वै बाढमित्येव शिष्यः शोकाभिशान्तये ॥३॥
नाक्रम्या गौरवी च्छाया देवं यानगता त्वपि ।
गुरुवद्गुरुवर्गश्च द्रष्टव्यो नित्यमेव हि ॥४॥
शयनासनयानाद्यं तदीयमभिनन्दयेत् ।
अतन्द्रितः सदा कुर्याद्व्यापारं तद्गृहेऽखिलम् ॥५॥
नासने तल्पमञ्चे च योगाभ्यासश्च धारणा ।
सुयन्त्रितः सयतवाक्कदाज्ञासम्प्रतीक्षकः ॥६॥
तत्सन्निधौ तु नान्येषां प्रत्युत्थानं समाचरेत् ।
कुर्यात्संशयविच्छित्तिं न तदादेशतो विना ॥७॥
व्याख्यानमागमानां च योगाभ्यासश्च धारणा ।
अवश्यकार्याण्येतानि स्वगृहे न गुरोर्गृहे ॥८॥
न शङ्खचक्रपद्माङ्के भोक्तव्यं भाजने तु वै ।
तल्लक्ष्म चोपलं काष्ठं लोष्टं वा फलकादिकम् ॥९॥
क्रमणीयं न पादेन कल्प्यं नैवासनार्थतः ।
भगवच्छासनज्ञानामागधनरतात्मनाम् ॥१०॥
यथोचिता यथाशक्ति पूजा कार्या सदैव हि ।

प्रासादं देवदेवीयमाचार्यं पाद्यगन्धिकम् ॥११॥
अश्वत्थं च वटं धेनुं सत्तमं गुरोर्गृहम् ।
दूरात्प्रदक्षिणीकुर्यान्निकटे प्रतिमां विभो ॥१२॥
दण्डवत्प्रणिपातैस्तु नमस्कुर्याञ्च यदि शक्नुयात् ।
न यानपादुकारूढो न सोपानद्वपादभृत् ॥१३॥
न विक्षिप्तमना भूत्वा सविशेद्भगवद्गृहम् ।
न व्याख्यावसरे कुर्यात्प्रत्युत्थानाभिवादने ॥१४॥
नाभक्तानां न मूर्खाणां नास्तिकानां विशेषतः ।
दातव्यं सम्प्रदेयश्च नोपहासरतात्मनाम् ॥१५॥
नापूजितं समुद्घाट्य शासनं पारमेश्वरम् ।
समक्षं नान्यभक्तानां न तत्सन्देहशान्तये ॥१६॥
प्रकाशनीयं तल्लोभान्न चान्यायेन नोभयात् ।
सुगन्धफलपुष्पाद्यमपूर्वमुन्नितं च यत् ॥१७॥
अभोज्यं गुरुदेव विधिर्निवेदितवर्जितम् ।
तस्करात्पतिताचण्डाद्दम्भलोभमदान्वितात् ॥१८॥
मात्राविरं न गृह्णीयादशक्त्यादुपचारतः ।
गृहीत्वा भगवद्विम्बं वृत्त्यर्थमटतीति यः ॥१९॥
नगरापणवीथीनां तस्य देवलकस्य च ।
दर्शनं स्पर्शनं नैव कुर्यात्संभाषणं तथा ॥२०॥
गायेत्तु भगवद्गाथा यो ग्रामे नगरान्तरे ।
तं प्रभुस्तावकं चैव पूजयेच्चैव सर्वदा ॥२१॥
विष्णुव्रतपरं चैव विष्ण्वायतनवासिनम् ।
विष्ण्वालापकथासक्तं विष्ण्वायतनमार्जकम् ॥२२॥
श्रावकं वैष्णवानां च विष्णुधर्मपरायणम् ।
पर्येष्टिकृद्वैष्णवानां मान्यो वै विष्णुवत्सदा ॥२३॥

प्रातस्त्याम चिन्त्याल्यारामास्त्वयमेव हि ।
पूजार्थमन्त्रमन्त्रेण पुष्पादीन् प्रगत. सदा ॥२४॥
यायादरण्यमथ वा निर्माय हि तदार्जने ।
अकण्टकद्रुमोत्थाश्च कण्टकद्रुमजा अपि ॥२५॥
द्रव्याः सुगन्धाः कर्मण्या प्राह्याः सर्वे सितादयः ।
उग्रगन्धा ह्यकर्मण्यास्त्वप्रसिद्धास्तथैव च ॥२६॥
चतुष्पथशिवावाम्श्मशानावनिमध्यगाः ।
हता अशनिपाताद्यैः कृमिकीटसमावृताः ॥२७॥
वर्जनीया प्रयत्नेन पापुष्पफलादयः ।
अम्बुजानि सुगन्धीनि सितरक्तादिकानि च ॥२८॥
योक्तव्यानि पवित्राणि नित्यमाराधने तु वै ।
साङ्कुराणि च पत्राणि सुगतान्येवमेव हि ॥२९॥
विहितान्यर्चने नित्य यदर्तुप्रभवानि च ।
न गृहे कर्णिकारोऽथै कुसुमैरर्चनं हितम् ॥३०॥
विशेषत सकाममय सिद्धिभूतियुतस्य च ।
अतोऽन्यथा न दोषोऽस्ति दोष उन्मत्तकादिभिः ॥३१॥
सद्यो हृतानां विहिन म्लानाम्लाना यथा क्रय. ।
प्रदानमम्बुसिक्तानां तथा कुर्यात्त चान्यथा ॥३२॥
निर्दोषता प्रयात्याशु मन्त्रिणामवलोकनात् ।
भवन्ति भक्तिपूतानि हृन्मन्त्रनिरतात्मनाम् ॥३३॥
न कांस्यपात्रे संस्थाप्य न तत्र विनिवेदयेत् ।
देवाय मधुपर्कादि तथा वै सति सम्भवे ॥३४॥
मृण्मयायससारानां न धूपमपि निर्दहेन् ।
धूपार्थं गुग्गुलु सम्यो देयश्चाभावतोपरः ॥३५॥
सह घण्टारवेणैव धूपार्थं परिवर्जयेत् ।

मेषो मज्जातसीतैलं घृतं तैलविमिश्रितम् ॥३६॥
नाविकं मधुपर्कार्थे दधिक्षीरादिकं शुभम् ।
कौलत्थः कोद्रवः कृष्णः माल्युत्थो नोदनो हितः ॥३७॥
नापक्वान्नं न मांसं च आरनालविभावितम् ।
न चाराधनकाले तु समुत्तिष्ठेत्त्वरान्वितः ॥३८॥
आसमाप्तिक्रियां चैव उपरोधेन केनचित् ।
आधाराद्भगवद्बिम्बाद्भद्रपीठान्मलच्युतिः ॥३९॥
न कार्या कण्टकैर्लोहैर्मृदुकूर्चादिना विना ।
न सायान्न स्वपेन्नमो न मौनश्चाचरेद्गुरौ ॥४०॥
नोच्छिष्टं संस्पृशेत्किञ्चिन्नाश्नीयाद्भगवद्गृहे ।
सन्निकर्षेण चान्नं तु न गृहे मधसङ्करे ॥४१॥
भक्तानां कृतदीक्षाणां व्यङ्ग्यः शास्त्रार्थ एव हि ।
अन्येषां धर्मशास्त्रं च लोभनिर्मुक्तया धिया ॥४२॥
शिष्याणां विष्णुभक्तानां नित्यं कुर्याच्च संग्रहम् ।
मानमात्सर्यकार्पण्यलोभमोहादयो गुणाः ॥४३॥
नेतव्यास्तानव सर्वे यावज्जीवावधि क्रमात् ।
अकस्मादुपपन्नानां देशान्तरनिवासिनाम् ॥४४॥
इष्टोपदेशः कर्तव्यो नारायणरतात्मनाम् ।
यो न वेत्त्याच्युतं तत्वं पञ्चरात्रार्थमेव च ॥४५॥
तथा स वैष्णवीं दीक्षां नानाशास्त्रोक्तलक्षणाम् ।
तेनेन सह सम्बन्धः कार्यो भिन्नक्रमेण तु ॥४६॥
। शास्त्रार्थस्य शास्त्राणां बुद्धिपूर्वं उपप्लवः ।
आचर्तव्य इहाज्ञानात्पारम्पर्यक्रमं विना ॥४७॥
प्रष्टव्यो भगवद्भक्त आप्तो लक्षणकोविदः ।
प्रसिद्ध आर्जवे दृढो नष्टं शास्त्रार्थलक्षणम् ॥४८॥

मुद्रामण्डलमन्त्राणां निष्पन्देऽपरेण च ।
भवितव्यं गुरूणाञ्च सकाशात्सर्वदैव हि ॥४९॥
न च सर्वमन्त्राणां विना मायाशकेन तु ।
आनुकूल्यं गवेष्टव्य मुक्त्वा मण्डलदर्शनात् ॥५०॥
नाभिचक्रे तु हृत्पद्मे कन्दमूले गलान्तरे ।
भ्रूमध्ये ब्रह्मरन्ध्रे च स्थानेष्वेतेषु मन्त्राद् ॥५१॥
स्मर्तव्यस्तूर्य सद्भाश प्रवासे शयनेध्वनि ।
मृगसूकरग्रामानि नाद्यान्मीनोत्थितानि च ॥५२॥
नाद्सकच्छपीयानि न शृङ्गाटफलानि च ।
न तथा दधीजानि न वटामं समारुहेत् ॥५३॥
छेद्यमान न त दहयेत्तद्दलं वाङ्मिणा स्पृशेत् ।
पुण्यक्षेत्रे महातीर्थे सिद्धाश्रममनुत्तमम् ॥५४॥
वैष्णवीं पदं यामि व्यक्तिस्थान तथाच्युतम् ।
आसाद्य मण्डल कृत्वा चक्र वा द्वादशारकम् ॥५५॥
निर्वर्तनीय विधिवच्चातुर्मास्य महामते ! ।
गृहे स्वयमपूर्वं वा चक्र कृत्वा तु कुड्यगम् ॥५६॥
चतुर्विधेन रजसा प्रतिमाया अथामत ।
सयुक्तानपि पूर्वोक्तैरेताश्च समयान् सदा ॥५७॥
निर्वाहकाणा भक्ताना प्रयच्छेत्सततगुरु. ।
ज्ञात्वा निर्वाहकं भक्त तस्यादौ देशिकेन तु ॥५८॥
समुद्दिश्याश्च ते सर्वे निर्वहत्यथ येषु च ।
तेषु तेषु नियोक्तव्यो यथा न च्यवते पुनः ॥५९॥
भावन्ति समयस्थस्य सविघ्नाः सविनाशका. ।
विमुखा सिद्धयो यान्ति ह्यापदो हि भवन्तिच ॥६०॥
ज्ञात्वैव सावधानेन भवितव्यं हि तां प्रति ।

सारमादाय वै बुध्या निर्मथ्य नियमोदधिम् ॥६१॥
कृपया गुरुणा देयमशठानां च पावकम्।
भक्तिरग्नौ गुरौ मन्त्रे शास्त्रे तदधिकारिणि ॥६२॥
नियते पञ्चकस्यास्य यथावत्परिपालनात्।
अनुष्ठानात्तु नान्येषां स्वतन्त्रेण यथेच्छया ॥६३॥
भक्तानां मनसोऽभीष्टाः प्रवर्तन्ते हि सिद्धयः।
येऽनिर्मलेन मनसा उपरोधात्तु कुर्वते ॥६४॥
पालनं समयानां च ते मज्जन्त्यसितेष्वपि।
सुप्रसन्नेन मनसा यथैतत्परिपाल्यते ॥६५॥
तथा प्रसादमभ्येति स्व आत्मा तु हितैषिणाम्।
नूनं कालुष्यमुक्तानां सितानामिह सत्पथे ॥६६॥
समयी साधकाचार्य पुत्राणां च भवेच्छुभम्।
इत्येवमुक्ता नियमा इतः किं श्रोतुमिच्छथ ॥६७॥

इति श्रीपाद्मरात्रे ईश्वरसंहितायाम्
नियमविधानं नाम
द्वाविंशोऽध्यायः।

---

## अथ त्रयोविंशोऽध्यायः।

मुनयः।

भगवन्नारदमुने सर्वज्ञ वदतां वर!।
स्वरूपं दिव्यशास्त्रादेर्मन्त्राणां लक्षणं तथा ॥१॥
मुद्राणां लक्षणं मूर्तिध्यानं कुण्डादिलक्षणम्।
देहिरादिविधानं च यच्चान्यदुपयते ॥२॥
तत्सर्वं विस्तरेणैव वदस्वानुमहादिना ॥

नारद ।

शास्त्रं दिव्यं च मुन्युक्तं पौरुषं चेति वै त्रिधा ।
प्रोक्तं तल्लक्षणं तु प्रवक्ष्यामि मुनीश्वराः ! ॥३॥
यदर्थाघमलादिभ्यः स्वच्छमक्षराक्षरं स्थिरम् ।
चातुरात्म्यस्वरूपेण संस्थितस्य विभो सदा ॥४॥
स्वाभाविकं परत्वं तु यत्र यत्र समीरितम् ।
अन्यासां मन्त्रमूर्तीनां यत्र चौपाधिकं तु यत् ॥५॥
तुर्यादिजाग्रत्पर्यन्तं पदभेदं प्रकाशितं ।
भक्तानामनुकम्पार्थं यत्र वै चतुरात्मन ॥६॥
शक्तीशस्याभिभोगेन विभवं समप्रकाशितं ।
अलाञ्छनभूषाणां शक्तीनां विहगेशितुः ॥७॥
लयादिभेदभिन्नं तु स्वरूपं यत्र भाषितम् ।
बीजपिण्डपदाख्येन चातुर्विध्येन सत्तमाः ॥८॥
मन्त्राः प्रवर्तिता यत्र यत्र स्थापनकर्मणि ।
अनुवेधक्रियाप्रोक्ता यत्र वै नित्यपूजनम् ॥९॥
मूलमूर्तौ तु सम्पूर्णं प्रोक्तं प्राधान्यतो द्विजाः ! ।
तत्र कर्तुमशक्य यत्स्नानाद्यं तावदेव तु ॥१०॥
बिम्बान्तरे तदर्थं तु कर्मबिम्बपुरस्सरे ।
विहितं दर्पणाद्येषु तदभावान्महामते ! ॥११॥
क्ष्माजकानलवाय्वाख्यनाभसीयेन वै द्विजाः ! ।
धारणापञ्चकेनैव धारणाद्वितयेन च ॥१२॥
दहनाप्यायनाख्येन यत्र शुद्धिश्च भौतिकी ।
आगमश्रुतिमूलत्वं स्वस्य यद्युपपादकम् ॥१३॥
तत्पारमेश्वरं वाक्यमाज्ञासिद्धं हि मोक्षदम् ।
एकवाक्यत्वात्यार्थं आगमो यो महामते! ॥१४॥

सन्मार्गदर्शनं कृत्स्नं विविधादं च विद्धि तम् ।
तत्प्रामाण्यात्तु यत्किञ्चित्तत्सम्भृत्य यथार्थतः ॥१५॥
पूर्वापराविरोधेन निर्णयमविचारतः ।
सर्वेषां रञ्जकं गूढं निश्चयीकरणक्षमम् ॥१६॥
पारमेश्वरवाक्योक्तमर्थजालं यथास्थितम् ।
सत्यगीशापयघयत्तात्विकं मुनिभाषितम् ॥१७॥
प्रशस्तं यस्मिद्धर्ना सम्प्रवर्तकमप्यथ ।
मूलमूर्तिमनादृत्य कर्मार्चाया तु पुष्कलम् ॥१८॥
नित्यसम्पूजनं प्रोक्तं प्राधान्येन तु यत्र वै ।
क्षणदादिबिम्बानां प्रमाणं लक्षणं तथा ॥१९॥
स्नापनं यत्र निर्दिष्टं यत्र वै जगतां पते ।
पूजनं तु समुद्दिष्टं प्राकृतानां जडात्मनाम् ॥२०॥
तन्त्रानामपि विप्रेन्द्र ! दिशः कालस्य वाचकैः ।
परमेष्ठ्यादिभिर्मन्त्रैः पञ्चभिर्यत्र वै क्रमात् ॥२१॥
स्नापनादिप्रतिष्ठान्तं पञ्चकं समुदीरितम् ।
यागपूर्वा हरिस्तोमपर्यन्ता सप्त कीर्तिता ॥२२॥
यागा यत्र तथा सप्त तत्क्रमादधिकारिणः ।
उक्तं यत्र प्रतिष्ठायां षोडशन्यासकल्पनम् ॥२३॥
एतज्जानीहि तत्त्वं राजसं मुनिभाषितम् ।
भगवन्तं समुद्दिश्य यत्रभाव विनैव तु ॥२४॥
ब्रह्मरुद्रमुखानां तु विबुधानां नवैव च ।
मातृणामपि दुर्गाया स्वतन्त्रयेण तु यत्र वै ॥२५॥
मन्त्रध्यानं प्रमाणं च लक्षणं स्थापनं तथा ।
निर्दिष्टं तामसं नाम मुनिवाक्यं तु विद्धि तत् ॥२६॥
अनर्थकमसम्बद्धमल्पार्थं सकण्टकम्परम् ।

अनिर्वाह्कमायोपनेर्वाक्य तत्पौरुष स्मृतम् ॥२७॥
द्वेय चानर्थभिर्द्धानामाकर नरकावहम् ।
पारमेश्वरवाक्यार्थैर्यद्विरोधि न तत् द्विजा ॥२८॥
समाद्य सात्विकाद्येषु मुनिवाक्येषु यत्नत ।
यदप्यपेक्षित विप्र' समाश्रमविरोधि तत् ॥२९॥
सात्विकादिषु गायेषु समभ्यूह्य महामते! ।
प्रसिद्धार्थमुपादाय सङ्गतार्थं विलक्षणम् ॥३०॥
अपि चेत्पौरुष वाक्य ग्राह्य तन्मुनिवाक्यवत् ।
एव दिव्यादिशास्त्राणा भेद ज्ञात्वा यजेद्धरिम् ॥३१॥

यो न ज्ञात्वा तु साङ्कर्यं पूजायमनुतिष्ठति ।
स हि सर्वस्य जगत साङ्कर्यं कुरुते सदा ॥३२॥
विशेषात्स्वस्य यशस्य तस्माद्दापद्यपि द्विजा ! ।
न कुर्याच्छास्त्रसाङ्कर्यं हितैषी शास्त्रकोविद ॥३३॥
स्वयव्यक्त तथा सैद्ध विबुधैश्च प्रतिष्ठितम् ।
मुनिमुख्यैस्तु गन्धर्वैर्यक्षैर्विद्याधरैरपि ॥३४॥
रक्षोभिरसुरैर्मुख्यै स्थापित मन्त्रविग्रहम् ।
दिव्यशास्त्रोक्तविधिना पूजयेच्छास्त्रकोविद ॥३५॥
स्थापित मनुजैर्देव मुनिवाक्योक्तमार्गत ।
पूजयेद्द्विज ! तत्रापि ज्ञानिभिस्तत्त्वदर्शिभि ॥३६॥
वासुदेवैकनिष्ठैस्तु देवतान्तरवर्जितै ।
व्यामिश्रयागमुक्तै तु तीव्रभक्तिसमन्वितै ॥३७॥
स्थापित मनुजेन्द्रैस्तु धनुर्वेदादिकोविदै ।
अर्चयेद्देवदेवेश दिव्यशास्त्रोक्तवर्त्मना ॥३८॥
मुनिवाक्योक्तमार्गेण पूजन यत्र वर्तते ।
तत्रापि दिव्यमार्गेण चेत्पूजन कर्तुमिच्छति ॥३९॥

मुनिमार्गं परित्यज्य दिव्यमार्गेण पूजनेत् ।
भवेत्सान्निध्यविनाहात्स्य काल कल्पक्षयावधि ॥४०॥
दिव्यमार्गेण पूजाद्य वर्तते यत्र नित्यशः ।
तत्र दिव्यं परित्याज्य न कदाचिन्महामते ! ॥४१॥
मुनिवाक्योक्तमार्गेण न कुर्यात्पूजनादिकम् ।
कुर्याद्वा यदि सम्मोहाद्द्विज. सम्मूढचेतनः ॥४२॥
सम्प्रयात्यचिरात्तस्य भवितर्जिन वै सह ।
समन्तं कर्मतन्त्रं च सिद्धयश्च पराङ्मुखा ॥४३॥
इहैव शीघ्रं विप्रेन्द्र! देहान्ते गतसन्तति. ।
घोरं प्रयाति नरकं राजा राष्ट्रं च नश्यति ॥४४॥
तस्मात्सर्वप्रयत्नेन दिव्यमार्गं तु न त्यजेत् ।
तामसेन तु मार्गेण पूजनं यत्र वर्तते ॥४५॥

तत्रापि राजसेनैव पूजनं सिद्धिद भवेत् ।
राजसेन तु पूजाद्य वर्तते यत्र नित्यश. ॥४६॥
तत्रापि सात्त्विकेनैव पूजनं शुभद सदा ।
सात्त्विकेन तु पूजाद्य वर्तते यत्र चान्वहम् ॥४७॥
तत्र राजसमार्गेण न कुर्यात्पूजनादिकम् ।
यत्र राजसमार्गेण मत्पूर्वं त्वर्चनादिकम् ॥४८॥
तत्र तामसमार्गेण न कुर्यादर्चनादिकम् ।
त्रिविधानां मार्गाणामन्योन्यं स्यान्न सङ्करः ॥४९॥
सर्वत्र पौरुषे वाक्ये तदाम्नायमविरोधि यत् ।
केवलं तद्विधानेन न कुर्यात् स्थापनादिकम् ॥५०॥
एवं दिव्यादिशास्त्रस्य स्वरूपं कथितं मया ।
मन्त्रस्वरूपमधुना कथ्यते मुनिपुङ्गवाः ! ॥५१॥
सर्वेषु विष्णुमन्त्रेषु मन्त्राः स्युर्यापकाह्वयः ।

आद्य नारायणाष्टार्णं द्वितीय द्वादशाक्षरम् ॥५२॥
वासुदेवस्य योगीन्द्रास्ततो विष्णुः षडक्षरम् ।
साधारणास्त्विमे मन्त्रास्त्रय सर्वासु मूर्तिषु ॥५३॥
अन्ये तु मनवस्तत्तन्मूर्तिमात्रपरा मता ।
व्यापकत्रितयेनार्च्या सर्वा अपि च मूर्तय ॥५४॥
मन्त्रैरन्यैस्तु संपूज्यास्तत्तन्मूर्तय एव हि ।
तस्मात्सर्वेषु मन्त्रेषु व्यापकत्रितय वरम् ॥५५॥

त्रिष्वप्येषु व्यापकेषु मन्त्रोऽष्टाक्षरोऽधिक ।
अष्टाक्षरादिमन्त्राणामुद्धार शृणुतादरात् ॥५६॥
उद्धरेत्प्रणव पूर्वं नम शब्दमनन्तरम् ।
ततो नारायणायेति ह्यष्टाक्षरो मनु ॥५७॥
प्रणवान्ते नम शब्द कुर्यान्त भगवत्पदम् ।
वासुदेवाय वै दद्यात्पद पश्चात्पर तत ॥५८॥
वासुदेवस्य देवस्य मन्त्रोऽय द्वादशाक्षर ।
चतुर्थ्यन्त विष्णुपद तारेण नमसान्वितम् ॥५९॥

आदावन्ते च तन्मन्त्र षडक्षर उदीरित ।
ज्ञानादिगुणसयुक्तैरक्षरैर्बिन्दुभूषितै ॥६०॥
हृदयाद्यङ्गक्लृप्ति स्याच्छिष्टवर्णैरपि द्विजा ॥
नेत्रेण योजयेदेवमङ्गक्लृप्ति प्रकीर्तिता ॥६१॥
ततस्तु मूर्तिमन्त्राणामुद्धारक्रम उच्यते ।
प्रशस्ते विजने गुप्ते गन्धलिप्ते धरातले ॥६२॥
सुधूपितेऽर्घ्यपुष्पाढ्ये वर्णचक्र प्रसार्य च ।
यस्मिन् प्रतिष्ठित विश्वमाब्रह्मभुवनादिकम् ॥६३॥
येनोदितेन जगत प्रभव समनन्तरम् ।
स्वात्मन्युपरते तस्मिन् प्रलय सम्प्रजायते ॥६४॥

प्रेरक चन्द्रसूर्याभ्या सबाह्याभ्यन्तर तु स्तु ।
नित्योदित मयाक्षस्य वर्णमीश्वरवाचकम् ॥६५॥
यत्र स्थानविभागेन वर्णात्मा भगवान् स्थित ।
अकाराद्यो विसर्गान्त सौरचान्द्रकलागण ॥६६॥
ह्रस्वदीर्घविभागेन नाभौ यत्र द्विरष्टक ।
कादिभान्तोप्यराशस्य प्राकृतस्तत्त्वसचय ॥६७॥
पृथिव्यादिप्रकृत्य तो युग्मयोगेन लाङ्गलिन् । ।
कलनादेहमृत्कालो नेमिगो नवलक्षण ॥६८॥
मकाराद्यो ह्वर्गान्तो यत्र प्रधिगणे स्वमम् ।
कालवैश्वानर साक्षान्मार्ताण्डायुतदीधिति ॥६९॥
ज्वालायुतसहस्राढ्यो वर्णान्तो भगवान् स्थित ।
आमध्यात्प्रधिपर्यन्तान्नमोन्ता वर्णस ततिम ॥७०॥
उच्चार्मार्घ्यादिनाभ्यर्च्य विद्याबीज हि चक्रराट् ।
तत समुद्धरेन्मन्त्र परमात्मनि वाचकम् ॥७१॥
गळ तममृतप्रख्यमचिरान्मोक्षसिद्धिदम् ।
अक्षसमुद्धरेत्पूर्वं नेमिषष्ठमनन्तरम् ॥७२॥
नाभिद्वितीयेनाक्रान्त द्वितीयमिदमक्षरम् ।
द्वितीय दशसख्याच तदधश्चाष्टमात्परम् ॥७३॥
नाभेस्त्रयोदशोपेत तृतीयमिदमक्षरम् ।
अथ द्वितीय नवमान्नाभितुर्यादिनान्वितम् ॥७४॥
द्वितीयमष्टमाद्वर्णं केवल विद्धि पञ्चमम् ।
विज्ञानपदमादाय त्र्यक्षर तदनन्तरम् ॥७५॥
आद्यमेकादशाद्वर्णं भिन्न नाभ्यपरेण तु ।
नेमेस्तृतीयवर्णस्य ततस्तदुपरि न्यसेत् ॥७६॥
मन्त्रार्णं नवम ह्येतद्गम मे निबोध तु ।

नाभिद्वितीयेन ...... ॥७७॥
नेमेर्द्वितीयं तदनु नेमार्दाय चाप्ययम् ।
तदुद्देशाक्तृतीयं च स्थितं .... ॥७८॥
तयोदशमिदं विद्धि नवमादपरं ततः ।
षष्ठस्य नेमिवर्णस्य ऊर्ध्वे तत्त्रितयं न्यसेत् ॥७९॥
युक्तं नाभेस्तृतीयेन अथ षोडशमुच्यते ।
द्विधीम दशमाद्वर्णान्न्येकादशमयुनम् ॥८०॥
चैतन्यात्मपदं दद्यात्मनमस्कृतं परम् ।
द्वाविंशार्णो ह्ययं मन्त्रः पदैः षड्भिरलंकृतः ॥८१॥
तत्रैकार्णं पदं ज्ञानं चतुर्वर्णं पदं बलम् ।
षडक्षरैश्चाप्यैश्वर्यं वीर्यं पञ्चाक्षरं परम् ॥८२॥
चतुर्वर्णं पदं तेज शाक्तं स्याद्व्यक्षरं च यत् ।
तेजो वीर्यं बलं शक्तिरैश्वर्यं ज्ञानमेव च ॥८३॥
दृगस्त्रं कवचं शैखं शिरो हृत्पञ्चयथाक्रमम् ।
मन्त्रः समाधिविषये नानाभूमिजयेषु च ॥८४॥
निराकारो निरङ्गश्च स्मर्तव्यो ब्रह्मलक्षणः ।
तत्प्राप्त्युपाये प्रथमं यागहोमादिके तु वै ॥८५॥
साकारं सम्मरेत्साङ्गं परिवारेण चावृतम् ।
आनीता व्यक्तता येन स्वयं ज्ञानादयो गुणाः ॥८६॥
शश्वद्यागसमाप्त्यर्थं कर्मणामनुकम्पया ।
सोनङ्ग सस्मृतो मन्त्रो भक्तिश्रद्धावशेन तु ॥८७॥
फलं यच्छति वै नूनं नित्यं तद्भावितात्मनाम् ।
प्राधान्येन त्वथैश्वर्यं मोक्षो यत्रानुषङ्गतः ॥८८॥
तत्र तद्विमशान्त्यर्थमस्थान्तं विद्धि मन्त्रपम् ।
विपर्ययेतु नेशान्तो मन्त्रो यस्मान्महामते ॥८९॥

दृग्दृष्टिशुद्धिमार्गेण क विमा शान्तचेतसाम् ।
स्वकमन्तर्गतं तेजं स्वान्तःस्थाक्षं बहिष्कृतम् ॥९०॥
येन येन हि मन्त्रेण स च नेत्रान्वितः स्मृतः ।
स्वमन्त्राशस्त्वनुपमो येन येन हृदन्तरे ॥९१॥
सितासितं ममाक्रम्य स स तद्वाचकोऽन्वितः ।
अथ मन्त्रचतुष्कं तु भिन्नषाड्गुण्यवाचकम् ॥९२॥
कर्मणा मोक्षदं शश्वत्पूर्वोद्दिष्टं निबोध तु ।
आदायाक्षगतं बीजं नाभिपूर्वमतः परम् ॥९३॥
अरादेकादशात्पूर्वं तस्याधो विनिवेशयेत् ।
वर्णं नेमेस्तृतीयं यत्तृतीयमिदमक्षरम् ॥९४॥
द्वितीयमष्टमाद्वर्णं नाभेस्तुर्यादिनान्वितम् ।
ततस्तु नवमं नेमेः केवलं विद्धि पञ्चमम् ॥९५॥
अष्टमादपरं वर्णं द्वितीयस्वरसंयुतम् ।
षष्ठमेतद्विजानीयात्सप्तमं दशमात्परम् ॥९६॥
अथ द्वितीयं दशमादादायोर्ध्वे तु विन्यसेत् ।
अष्टमाद्यं द्वितीयस्य मन्त्रार्णमिदमष्टकम् ॥९७॥
द्वितीयात्प्रथमं वर्णमष्टमादपरं ततः ।
नाभ्येकादशमेपेतं द्वितीयं नेमिमण्डलात् ॥९८॥
पूर्वमेकादशाच्छुद्धं ताडर्न्नेमेस्तृतीयकम् ।
नेमिपूर्वं च तदनु नाभेरेकादशाङ्कितम् ॥९९॥
नेमेः पञ्चमथादाय स्थितं तत्पञ्चमोपरि ।
ततो नाभिद्वितीयेन युक्तं नेमेस्तृतीयकम् ॥१००॥
द्वितीयं केवलं नेमेरादाय च महामते ।
कर्तेनमः पदं पश्चाद्योजयेच्चतुरक्षरम् ॥१०१॥
एकविंशतिभिर्वर्णैरयं मन्त्र उदाहृतः ।

अभिन्नं पदभेदेन भवेदेकाधिकस्तु वै ॥१०२॥
मार्गर्णेन पदं पूर्वं पञ्चार्णं द्वितयं भवेत् ।
षडक्षरं तृतीयं तु चतुर्थं तद्वदेव तु ॥१०३॥
त्र्यक्षरं पञ्चमं विद्धि तद्वत् षष्ठं महामते ।
अथापरं महामन्त्रं द्वितीयमवधारय ॥१०४॥
यत् ज्ञात्वा न पुनर्जन्म भवत्याराधकस्य च ।
आदायाक्षरम्व मध्यस्थं नाभिपूर्वमतः परम् ॥१०५॥
पूर्वं नेमेन्तु तस्यैव योज्यं नाभित्रयोदशम् ।
द्विनेमादपरं वर्णं सर्वशक्त्यात्मनेपदम् ॥१०६
द्वितीयं द्वादशार्णं द्वितीयात्प्रथमं ततः ।
पञ्चमं च बहिस्त्र्यक्षरनेतान्विद्धि केवलान् ॥१०७॥
नाभ्येकादशसम्भिन्नं द्वितीयं चाष्टमात्ततः ।
नमोनमः पदयुतो मन्त्रश्चाष्टादशाक्षरः ॥१०८॥
अस्यैकार्णं पदं पूर्वं त्र्यक्षरं तदनन्तरम् ।
षडक्षरं तृतीयं तु चतुर्थं चतुरक्षरम् ॥१०९॥
द्वितीयं द्व्यक्षरंचान्त्यतदयोः समकीर्तितम् ।
तृतीयमथ वक्ष्यामि मन्त्रं मन्त्रविदां वर ॥११०॥
यं ज्ञात्वा मानसं शुद्धिं परमां याति कर्मिणाम् ।
बीजमादाय मध्यस्थमाद्यमेकादशात्ततः ॥१११॥
नमेम्तृतीयं तदधः ऊर्ध्वं नाभ्यपरं तु वै ।
अथाद्यमष्टमाद्यं द्वितीयस्वरसंयुतम् ॥११२॥
अरेकादशाद्यं वर्णमन्यं समाहरेत् ।
दशमादपरवर्णं नेमेरष्टमन्ततः ॥११३॥
युक्तं नाभिद्वितीयेन चाद्यं नेम्यक्षरं तु यत् ।
नाभित्रयोदशोपेतमादाय दशमात्परम् ॥११४॥

द्वितीय नवमाद्वर्णं युक्तं नाभ्यपरेण तु ।
तत्सत्य दशमाच्छुद्धं ततो बाह्यात्तु पञ्चमम् ॥११५॥
नेमेर्द्वितीय तदधो युक्तं नाभेः परेण तु ।
द्वितीय दशमाद्वर्णं प्राणाद्य त्र्यक्षर पदम् ॥११६॥
ततस्त्वेकादशादाद्य केवलं च समाहरेत् ।
अथ नाभिद्वितीयेन युक्तं नेमेस्तृतीयकम् ॥११७॥
नाभित्रयोदशोपेत बहिष्ठेप्यपर तत ।
नेमेस्तृतीयस्योर्द्ध्वे तु नवमादपर न्यसेत् ॥११८॥
ततो नाभिद्वितीयेन युक्तं प्राङ्नेमिमण्डलात् ।
द्वितीयमथ वै बाह्यात्सनमक हि केवलम् ॥११९॥
त्रयोविंशतिभिर्वर्णैरुपेतोप्येष मन्त्रराट् ।
पदै पूर्वोक्तसख्यैस्तु तेषा भेदोप्यथोच्यते ॥१२०॥
पूर्वमेकाक्षर विद्धि द्वितीय तु नवाक्षरम् ।
तृतीय द्व्यक्षर चैव चतुर्थं त्र्यक्षर स्मृतम् ॥१२१॥
षडक्षरमथो अं अ द्व्यक्षर तदनन्तरम् ।
चतुर्थमधुना मन्त्र निबोध गदतो मम॥१२२॥
येन विज्ञातमात्रेण सविदुत्पद्यते वरा ।
आदायादौ यदक्षस्थ नाभिपूर्वमनन्तरम् ॥१२३॥
ततस्तृतीयादपर वर्गमादाय लाङ्गलिन् । ।
नेमिद्वितीय तस्याधस्तदधो नाभिपञ्चमम् ॥१२४॥
द्वितीयमष्टमाद्वर्णं तत्सत्य नेमिमण्डलात् ।
आदायैतद्द्वय कुर्याद्युक्तं नाभ्यपरेण तु ॥१२५॥
अथ नाभितृतीयेन युक्तं बाह्यात्तु पचमम् ।
आद्यात्पूर्वमथादाय नाभिसप्तमसयुतम् ॥१२६॥
द्वितीयमष्टमाद्वर्णं द्वितीय नेमिमण्डलात् ।

आदायाम्या नियोक्तव्य द्वितीय नाभिगोचरात् ॥१२७॥
अथ द्वितीय दशमात्केवल वर्णमाहरेत् ।
द्वितीयमष्टमाद्वर्णं तदूर्ध्वे दशमात्परम् ॥१२८॥
नाभिद्वितीयमस्यैव योजयेत्तदनन्तरम् ।
ततो नेमिद्वितीय तु केवल वर्णमाहरेत् ॥१२९॥
अथ नाभेर्यदादिस्थ प्राग्वर्णं दशमादरात् ।
तदधो द्वितय वाद्यात्मथिवर्णमनन्तरम् ॥१३०॥
युक्त नाभिद्वितीयेन त्वादाय तदनन्तरम् ।
नेमिद्वितीयसम्य यन्नमस्कारवद तत ॥१३१॥
अष्टादशाक्षरो ह्येष द्व्यधिक पदसख्यया ।
एकार्णं पदमाद्य तु द्वितीय चतुरक्षरम् ॥१३२॥
पचाक्षर तृतीय तु चतुर्थं चतुरक्षरम् ।
तथैव पचम विद्धि ह्यन्तस्थ द्व्यक्षर स्मृतम् ॥१३३॥
यत्र यत्र पदाना च वर्णाधिक्यमुदाहृतम् ।
तत्रादौ नाभिपूर्वं तु व्याहृत्याद्य पद न्यसेत् ॥१३४॥
अथाभिन्नतनोर्मन्त्र देवस्याम्य महात्मन ।
विद्याम्यपूपसज्ञस्य वक्ष्ये विद्याविवेकवम् ॥१३५॥
वर्णमक्षरगादाय त्वाद्यमेकादशात्तत ।
मिश्र नाभिद्वितीयेन तृतीय नेमिमण्डलात् ॥१३६॥
द्वितीय केवल चाद्याद्योग्याय वै पदम् ।
ततस्त्वेकादशात्पूर्वं केवल तु समाहरेत् ॥१३७॥
तृतीयमक्षर चाद्यायुक्त नाभिपरेण तु ।
दशमादक्षर वर्णं पूर्वमेकादशात्तत ॥१३८॥
एकादशाक्षरा ... युक्तेरनन्तरम् ।
ततो नाभिद्वितीयेन युक्त मध्यमाद् द्वि यत्र ॥१३९॥

केवलं द्वितयं वाह्यादाद्यमेकादशाचथा ।
नेमेस्तृतीयं तदनु द्वितीयस्वरसंयुतम् ॥१४०॥
दशमाद्परं शुद्धं पूर्वमेकादशात्ततः ।
नाभ्येकादशसंयुक्तं तदन्तेऽमललोचन! ॥१४१॥
नाभेस्तृतीयसंयुक्तं अभिवर्णं समाहरेत ।
अथ नाभिद्वितीयेन युक्तं यत्परमष्टमात् ॥१४२॥
नेमेर्द्वितीयं तदनु नमस्कारसमन्वितम् ।
चतुर्विंशतिभिर्वर्णैर्युक्तो मन्त्रोऽयं महान् ॥१४३॥
प्रणवेन पदं चास्य पूर्वमेकाक्षरं स्मृतम् ।
द्वितीयं त्र्यक्षरं प्रोक्तं पंचार्णं तदनन्तरम् ॥१४४॥
षडक्षरं चतुर्थं तु सप्तार्णं चात्र पंचमम् ।
पदं तु द्व्यक्षरं षष्ठं मन्त्रस्यास्य महामते! ॥१४५॥
नानामन्त्रस्वरूपेण ह्यादिदेवः परः प्रभुः ।
आदिमध्यावसानेषु स्थितः सर्वस्य सर्वदा ॥१४६॥
चतुर्व्यूहचतुष्के स्वे शान्तादिव्यक्तलक्षणे ।
प्राधान्येन त्रयाणां च देवानामवतिष्ठते ॥१४७॥
यथाम्बरस्थः सविता लोक एव महामते! ।
जलाश्रयाणि चाश्रित्य बाह्यात्म्यं सम्प्रदर्शयेत् ॥१४८॥
एवमेकोपि भगवान् नानामन्त्राश्रयेषु च ।
तुर्यादिपदसंस्थेषु बहुत्वमुपयाति च ॥१४९॥
अनुग्रहार्थं भक्तानां नानाश्रद्धावशेन तु ।
चतुष्कमथ मन्त्राणां निबोध गदतो मम ॥१५०॥
सितादिवर्णव्यक्तीनां वाचकत्वेन वै क्रमात् ।
अक्षरं नाभिपूर्वं च वर्णं यद्दशमात्परम् ॥१५१॥
नेमिपूर्वमथो नाभेस्त्रयोदशसमन्वितम् ।

द्वितीयं द्वादशाद्वर्णं द्विकोणस्य प्रथमं ततः ॥१५२॥
पञ्चमं च वहिर्भ्यस्तानेतान्विद्धि केवलान् ।
ततोऽष्टमाद्वितीयं तु नाभ्येकादशभेदिनम् ॥१५३॥
पञ्चार्णं वासुदेवाय पदं च तदनन्तरम् ।
त्रयोदशाक्षरो शेषः प्रथमं परिकीर्तितः ॥१५४॥
क्रमेण वक्ष्याम्यन्येषामुद्धारं तु यथास्थितम् ।
अक्षरसमक्षरं नाभेर्द्वितीयं तदनन्तरम् ॥१५५॥
पूर्वमन्त्रानुसारेण ततो दद्यात्पदत्रयम् ।
अथात्र पञ्चदशमं नाभेरोङ्कारपूर्वकम् ॥१५६॥
पदत्रयेण तेनैव संयुक्तं विद्धि मन्त्रपम् ।
अथ षोडशसंख्यं यन्नाभे प्रणवपूर्वकम् ॥१५७॥
पूर्वोक्तलक्षणानां तु पदानां प्राङ्निवेशयेत् ।
अस्मान्मन्त्रत्रयाद्विद्धि द्वयं प्राङ्मन्त्रसंख्यया ॥१५८॥
एकं एकार्णरहितं पदभेदमतः शृणु ।
पदद्वयं तु सर्वेषामाद्यमेकाक्षरं स्मृतम् ॥१५९॥
द्व्यक्षरं च तृतीयं तु चतुर्थं चतुरक्षरम् ।
पञ्चाक्षरं पञ्चमं वै त्रयाणां समुदाहृतम् ॥१६०॥
तदेकस्य चतुर्वर्णं प्रद्युम्नास्यस्य लाङ्गलिन् ।
एवं स्वप्नपदस्यस्य समासात्परिकीर्तितम् ॥१६१॥
क्रमशोऽथ चतुर्णां वै वक्ष्ये मन्त्रान् शृणु ।
अक्षान्तर्गतमादाय नाभे पूर्वगतं परम् ॥१६२॥
भिन्नं नाभिद्वितीयेन नेमिपूर्वमनन्तरम् ।
नाभिपञ्चमसंयुक्तं दशमात्प्रथमं ततः ॥१६३॥
तृतीयं च द्वितीयं च नेमेरादाय चाद्ययेत् ।
नाभिद्वितीयबीजेन नवमादरं ततः ॥१६४॥

तदधो विनियोक्तव्य द्वितीय द्वादशात्तु यत् ।
पञ्चमेनाथ वै नाभेर्युक्त कुर्यादनन्तरम् ॥१६५॥
अष्टमादपर शुद्ध नेमिपूर्वं तथाविधम ।
युक्त नाभिद्वितीयेन द्वितीय नेमिमण्डलात् ॥१६६॥
भूयस्तत्केवल दद्यात्पद योगेश्वराय वै ।
तदन्ते चक्रिणे शब्दमथ नेमेर्यदष्टमम् ॥१६७॥
पञ्चमेनान्वित नाभेस्तदन्ते विनिवेश्य च ।
शुद्धमेकादशात्पूर्वमाद्य तदनु चाष्टमात् ॥१६८॥
नेमेस्तृतीयेनाक्रान्त ध्वजायेति पद न्यसेत् ।
भिन्नमेकादशात्पूर्वं नाभितुर्येण वै तत ॥१६९॥
अष्टमादपर शुद्ध पञ्चम नेमिमण्डलात् ।
द्वितीयस्वरसयुक्त ससेतिव्यक्षर पदम् ॥१७०॥
वासुदेवाय तदनु सनमस्क पद भवेत् ।
षट्त्रिंशदक्षरो मन्त्रो भेदस्तस्याधुनोच्यते ॥१७१॥
पदमेकादशार्णंतु प्रथम परिकीर्तितम् ।
पञ्चाक्षर द्वितीय तु तृतीय त्र्यक्षर स्मृतम ॥१७२॥
षडक्षर चतुर्थं तु पञ्चार्णं पञ्चम तु वै ।
षष्ठ ससाक्षर विद्धि पद पदविदा वर ! ॥१७३॥
प्रणवान्ते त्वथादाय द्वितीय नाभिमण्डलात् ।
चतुर्दशेन वै नाभेर्युक्त नेम्यष्टक तत ॥१७४॥
द्वितीय दशमाच्छुद्धमथ भूय समाहरेत् ।
तदधो नवमादन्त्य नाभेस्तुर्यादिनान्वितम् ॥१७५॥
एकादशस्वरात्रान्त द्वितीय दशमात्तत ।
बाह्यादथाष्टम नाभेर्युक्त पञ्चदशेन तु ॥१७६॥
केवल पञ्चम नेमेर्द्वितीयचाष्टमात्तत ।

चतुस्त्रिंशाक्षरः सोयं मन्त्रः शृणु पदान्यपि ।
आद्यं षडक्षरं ज्ञेयं द्वितीयं तद्वदेव हि ॥१९०॥
पंचाक्षरं तृतीयं तु चतुर्थं तु षडक्षरम् ।
पंचार्णं पंचमं विद्धि षड्वर्णं षष्ठमेव हि ॥१९१॥
अक्षस्थं षोडशं नाभेर्द्वितीयं दशमात्तु वै ।
केवलं ह्यभ तेनैव आक्रांतं नवमात्परम् ॥१९२॥
अथादाय च तस्यान्ते प्रथमात्प्रथमं परात् ।
युक्तं नाभिद्वितीयेन वर्णमेतन्महामते ! ॥१९३॥
वर्णद्वयं पदस्यादौ तदेवास्तेस्य वै पुनः ।
अथ द्वितीयं नवमात्प्रथमात्प्रथमं ततः ॥१९४॥
तृतीयमथ वै नेमेर्द्वितीयस्वरसंयुतम् ।
द्वितीयं केवलं चाद्यात्सप्तमं नाभिमण्डलात् ॥१९५॥
अथ षष्ठेन वै नेमेराक्रान्तं द्वितयं न्यसेत् ।
प्राग्वर्णं दशमान्नेमेः पञ्चमस्योर्ध्वगं तथा ॥१९६॥
चतुर्थादपरं वर्णं द्वितीयं नेमिमण्डलात् ।
द्वाभ्यां नाभिद्वितीयं तु योजयेत्तदनन्तरम् ॥१९७॥
दशमादपरं वर्णं तृतीयस्वरसंयुतम् ।
तृतीयमथ वै नेमेर्नाभिपञ्चमसंयुतम् ॥१९८॥
द्वितीयस्वरसंयुक्तं द्वितीयं नवमादरात् ।
अस्यैवाथो नियोक्तव्यं दशमात्प्रथमं हि यत् ॥१९९॥
शुद्धं नेमेर्द्वितीयं तु पदं स्वसितवामसे ।
विष्वक्सेनाय तदनु नमस्कारसमन्वितम् ॥२००॥
द्वात्रिंशार्णो ह्ययं मन्त्रः पदभेदेन वै पुनः ।
एकाधिकस्तु भवति पदान्यथ निबोध मे ॥२०१॥
त्र्यक्षरं तु पदं पूर्वं द्वितीयं त्वष्टवर्णकम् ।

त्रीणि पञ्चाक्षराण्यन्यत्सप्त सप्ताक्षरं स्मृतम् ॥२०२॥
अन्यदवसरे प्राप्ते स्मरणे चार्चने विभो ।
शृणु मन्त्रचतुष्कं तु पुनरन्यत्समासतः ॥२०३॥
नाभमन्त्रादशाद्वर्णं पञ्चमस्वरसयुतम् ।
युक्तं स्वरेण तेनैव तृतीयं नेमिमण्डलात् ॥२०४॥
द्वितीयस्वरसयुक्तमथ नाभात्तु सप्तमम् ।
द्वितीयं केवलं नेमेरायन्ते प्रणवो नमः ॥२०५॥
शुद्धं त्वथाष्टमं नाभाद्द्वितीयमथ चाष्टमात् ।
अथो नेमेर्द्वितीयेन युक्तं नाम्यपरेण तु ॥२०६॥
केवलं द्वितयं नाभान्नमस्कारं ततः परम् ।
अथाक्षरं नाभिपूर्वं द्वितीयं त्रिसयादरात् ॥२०७॥
तदधो द्वितयं नाभान्नाभिपचमसयुतम् ।
अथ नाभिद्वितीयेन युक्तं यत्परमष्टमात् ॥२०८॥
केवलं द्वितयं नाभान्नमस्कारमतः परम् ।
अक्षरबीजं तदनु द्वितीयं द्वादशादरात् ॥२०९॥
द्वितीयात्प्रथमं चाथ पंचमं नेमिमण्डलात् ।
केवलं द्वितयं नेमेर्द्वितीयं च तथाष्टमात् ॥२१०॥
एकादशस्वरान्तान्तं वासुदेवाय वै नमः ।
मन्त्रास्त्वन्ये मादृमन्त्रो द्विविधस्तु षडक्षरः ॥२११॥

द्वितीयस्वरसंयुक्तं सङ्कर्षणस्य बीजराट्।
उभयोरन्तरे रेफमाद्यबीजस्य योजयेत् ॥२१५॥
बीजं प्रद्युम्ननाथस्य तृतीयं सर्वकामदम्।
जीवारूढं हकारं तु लान्तस्योपरि विन्यसेत् ॥२१६॥
विसर्गसहितं बीजमनिरुद्धस्य वाचकम्।
हकारं च सकारस्य कृत्वा षोढा निवेश्य च ॥२१७॥
द्वितीयत्तुर्यषष्ठाष्टद्विषट्कदशकैः क्रमात्।
सर्वं नियोजयेद्विद्धि हृदाद्यास्त्रेत्वपश्चिमान् ॥२१८॥
चातुरात्मीयमन्त्राणां साधनत्वेन सर्वदा।
ततस्तु केशवादीनां मन्त्रांश्च शृणुतादरात् ॥२१९॥
त्रिधा हकारं कृत्वादौ जीवबीजं तथैव च।
ककारं च क्षकारं च लिखेत्तद्वत्त्रिधा त्रिधा ॥२२०॥
द्विपङ्क्तमेव बीजानां क्रमेणादौ निवेश्य च।
ततो वारिधरावारिसन्तु यथाक्षरत्रयम् ॥२२१॥
पौन पुन्येन सर्वेषामधोभागे नियोजयेत्।
सर्वे षष्ठस्वरारूढा अनुस्वारविभूषिता ॥२२२॥
बोद्धव्या केशवादीनां बीजान्येते पृथक् पृथक्।
प्रणवाद्यैर्नमोन्तैस्तैस्तुर्यान्तैर्नामभिः सह ॥२२३॥
केशवः प्रथमो वाच्यस्ततो नारायणः परः।
माधवश्चैव गोविन्दो विष्णुश्च मधुसूदनः ॥२२४॥
त्रिविक्रमो वामनाख्यः श्रीधरः पद्मलोचनः।
हृषीकेशः पद्मनाभो दामोदर इति श्रुतः ॥२२५॥
बीजैर्दीर्घस्वरोपेतैः माधवद्गानि कल्पयेत्।
अथ मन्त्रान् केशवादि देवीनां शृणुत द्विजाः ! ॥२२६॥
क्षान्तसत्तिनयं होतचतुर्थां विनिर्म्नेत्क्रमात्।

ततो द्विषट्क बीजाना तस्याथो विनिवेश्य च ॥२२७॥
क्रमेण सप्तमाद्वर्गाद्द्वितीय च चतुर्थकम् ।
पुनस्तृतीय तुर्ये च द्वितीय च तृतीयकम् ॥२२८॥
द्वितीय च चतुर्थं च चतुर्थं तदनन्तरम् ।
तृतीयमष्टमाच्चाथ तृतीय सप्तमात्पुन ॥२२९॥
नवमद्वादशाभ्या तु विशेषमिममाचरेत् ।
अथो निमोजयेद्रेफ तत्रूयाणा तु मूर्धनि ॥२३०॥
षट्सप्तमाष्टसज्ञानामीकारमुपरि न्यसेत् ।
सानुस्वार स सर्वेषामिति देवीगणस्य च ॥२३१॥
बीजद्वादशक प्रोक्त यथा चानुक्रमेण तु ।
तारबीजनमोयुक्तैर्वाच्यास्तत्तत्स्वनामभि ॥२३२॥
श्रीश्च वागीश्वरी कान्ति क्रियाशान्तिविभूतय ।
इच्छा प्रीती रतिश्चैव माया धर्महिमेति च ॥२३३॥
स्वरजात्यादियुक्तानि बीजानि हृदयादय ।
इत्येव केशवाङ्गीना देवीमन्त्रा प्रकीर्तिता ॥२३४॥
ततश्चदायुधाना च मन्त्रान् वक्ष्ये मुनीश्वरा ! ।
समुद्रमूर्तयेस्वाहा पद्मस्य प्रणवादिक ॥२३५॥
सर्वास्त्रधारिणे कृत्वा ततो गगनमूर्तये ।
स्वाहान्त प्रणवादेश मन्त्र शाङ्गस्य कीर्तित ॥२३६॥
ओंकारो वेदगोप विधे स्वापद तु ते ।
गदामन्त्रमन्त्रय प्रोक्तश्चक्राय निगद्यते ॥२३७॥
ओंकारान्ते पदद्वयापयाणे प्रक्षिप्यते ।
तदन्ते कालचक्र तु मूर्तये तु ततस्तु फट् ॥२३८॥
षट्कोणां धनुषी तु ज्योतिश्चक्र पृथक् ।
तथो विनयमूर्तिस्तो स मार सहस्रारपद स्थित ॥२३९॥

आराधनार्थं विहितो वाचको हि चतुर्विध॰ ।
संज्ञानानापदमयः पिण्डाख्यो बीजलक्षणः ॥२४०॥
एभ्यो मध्यात्त्वथैकेन वाच्यमामन्त्र्य भक्तितः ।
यत्रैकपिण्डबीजयोरथमन्त्रेणार्थमयात्मना ॥२४१॥
तत्र वै विधिनानेन कुर्यात्ताभ्यां हि कल्पनाम् ।
अभिन्नलक्षणो वाच्यमेक एवोपचर्यते ॥२४२॥
कृत्वादौ नाममन्त्रस्य बीजं पिण्डाक्षरं तु वा ।
नयेत्तेनाभिमुख्यं च वाच्यमाद्यन्तगेन वा ॥२४३॥
स तत्र पदमन्त्रं तु विधिनानेन वै ततः ।
कुर्यात्प्रणवपीठस्थं नमस्कारध्वजान्वितम् ॥२४४॥
आभ्यां शान्तस्वरूपत्वादेकत्वमत एव हि ।
संज्ञाख्यं पदमन्त्रं च विधिसंसिद्धिलक्षणम ॥२४५॥
स्वरोत्थं व्यञ्जनोत्थं वा बीजमेकाक्षरं स्मृतम् ।
स्वरव्यञ्जनसंयोगाद्द्वर्णः पिण्डमन्त्रराट् ॥२४६॥
द्वाभ्यामाद्यात्तथान्ताच्च स्वरवर्गान्महामते! ।
स्वरूपेण हि मन्त्रत्वमन्येषां सह बिन्दुना ॥२४७॥
स्वरेणैकेन युक्तस्य स्वरयुग्मान्वितस्य वा ।
सानुस्वारस्य बीजत्वं व्यञ्जनस्यापि लाङ्गलिन्! ॥२४८॥
सप्ताकाराव्ययाव्यक्तस्य विवर्तो दीधितिप्रभः ।
सल्लक्षणस्त्वनाकारो विद्धि तद्वाचकं त्रिधा ॥२४९॥
क्वचित्पिण्डं क्वचिद्बीजं क्वचिच्छब्दमनाहतम् ।
तस्य चोद्दीयमानस्य परिमाण॰ स्फुटोहि यः ॥२५०॥
बहक्षरो बहुपदः स्तुतिर्मंत्रोपलक्षण. ।
अविनाशी सप्ताकारो बीजादीनां महर्षिद॰ ॥२५१॥
प्राग्वदानन्दवेनाथ सत्यास्त्वेनामनं महत् ।

विदधाति फलं स्वे स्व किं त्वाचे भावयेत्पदम् ।
मन्त्रक्षेत्रज्ञरूपत्वाद्यस्मात्सर्वेश्वरोऽच्युतः ॥२६५॥
व्याप्यव्यापकरूपेण वर्ततेऽनुग्रहेच्छया ।
व्याप्यरूपेण भूलोकाद्योगादारभ्य चाखिलान् ॥२६६॥
षाड्गुण्यमहिमान्तं च ददाति फलमुत्तमम् ।
स्वपदं भोगखिन्नस्य दिव्यदेहस्य कर्मिणः ॥२६७॥
क्षेत्रज्ञबीजपिण्डात्मा निरावरणलक्षणः ।
ज्ञानं यदमलं शुद्धं सयच्छत्यात्मलाभदम् ॥२६८॥
शक्तिव्यक्तिमयत्वं च जाग्रद्वृत्तोपदात्मनः ।
एव संज्ञात्मनः स्वप्नवृत्तेरेकत्वमस्ति च ॥२६९॥
सुषुप्तिवृत्तेः पिण्डाख्यमन्त्रस्यैव महात्मनः ।
बीजात्मनस्तुर्यवृत्तेः शक्तिव्यक्तित्वमस्ति वै ॥२७०॥
व्यक्तिज्ञानफलोपेता नियता यद्यपि स्मृता ।
भगवन्मन्त्रमूर्तीनां तथापि परमात्मनः ॥२७१॥
आद्यस्य चातुरात्म्यस्य केवलस्याथ वा विभोः ।
चतुष्प्रकारं यन्मन्त्र विद्धि तन्मोक्षभूतिदम् ॥२७२॥
अतोन्यथा यदुद्दिष्टममिश्रं मिश्रमेव हि ।
फलं भाववशाच्चैव तत्तथा विद्धि नान्यथा ॥२७३॥
शृणुध्वमथ बीजानि सावधानेन चेतसा ।
शुचौ देशे मनोज्ञे च सुलिप्ते पुष्पभूषिते ॥२७४॥
चन्दनक्षोदसंयुक्ते सुधूपेनाधिवासिते ।
विलिख्य मातृकाचक्रं भेदनानेन वै पुनः ॥२७५॥
येन सन्दृष्टमात्रेण शतधा याति कल्मषम् ।
प्रागादौ पञ्चवर्गान्तान् मध्यान्त मध्यतो लिखेत् ॥२७६॥
यादयो नव नाभिस्था आदयः षोडशारगाः ।

काद्यो नेमिगा सर्वे पूर्वचक्रे यदक्षरम्‌ ॥२७७॥
तदस्मिन्‌ प्रथिमूत तु पूजयेद्विधिना तत ।
शब्दब्रह्ममय चक्रमर्घ्यपुष्पादिकै क्रमात्‌ ॥२७८॥
सम्यग्व्यादुद्धरेदादौ सर्वेषा कारण हि यत्‌ ।
उदक्स्थमक्षर चाक्षादरान्तावेनभूषितम्‌ ॥२७९॥
विद्धि सर्वेश्वरस्येद बीज निर्बीजकारणम्‌ ।
तदेवाञ्जन।मस्य विसर्गसहित स्मृतम्‌ ॥२८०॥
नेमिवर्गाद्द्वितीय वै तनोरात्षष्ठमक्षरम्‌ ।
अष्टम नाभिदेशाच्च तत्सग्य नेमिमण्डलात्‌ ॥२८१॥
नेमिपूर्वमतो नाभे सप्तम पञ्चमारगम्‌ ।
अराश्चतुर्दश त्वक्षात्षष्ठिमाद्यागत हि यत्‌ ॥२८२॥
नेमेरेकादश चाथ षोडश च त्रयोदशम्‌ ।
पञ्चम नाभिदेशाच्च नेमेरेकोनविंशकम्‌ ॥२८३॥
तदन्त सप्तम चैव नवम हि महामते ।
नाभेस्तृतीय तदनु नेमेस्तत्सप्तमेव च ॥२८४॥
द्वादशश्च बहिष्ठेभ्यो दशम षोडशात्परम्‌ ।
नाभिपूर्व ततो वर्ण नेमे पञ्चदश हि यत्‌ ॥२८५॥
तुर्यसल्यमराद्बीज ततो नाभिचतुर्थकम्‌ ।
षष्ठ नेमेश्चतुर्थ च मध्यमक्षात्तथा हरेत्‌ ॥२८६॥
तत्रैव पूर्वदिक्स्थ यद्वाद्याद्वै पञ्चम तत ।
अक्षाद्दक्षिणदिक्सस्थ नेमेरष्टादश तत ॥२८७॥
द्वितीय नाभिदेशाच्च तदन्ते सप्तमारगम्‌ ।
चतुर्दशमतो नेमे षष्ठ नाभेश्चाहरेत्‌ ॥२८८॥
सर्वे कारणभूर्मा योजनीया समासत ।
भगवाचा नमान्ताश्च वेजसात्मैव निर्भरा ॥२८९॥

पद्मनाभादयो देवा वाच्यास्तेषां क्रमेण तु ।
पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः ॥२९०॥
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः ।
क्रोडात्मा वडबावक्त्रो धर्मो वागीश्वरस्तथा ॥२९१॥
देव एकार्णवशयः कूर्मः पातालधारकः ।
वराहो नारसिंहश्चाप्यमृताहरणस्तु वै ॥२९२॥
श्रीपतिर्दिव्यदेहोथ कान्तात्माऽमृतधारकः ।
राहुजित्कालनेमिघ्नः पारिजातहरो महान् ॥२९३॥
लोकानाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोधशायी भगवानेकशृङ्गतनुस्ततः ॥२९४॥
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥२९५॥
ज्वलत्परशुधृग्रामो रामश्चान्यो धनुर्धरः ।
वेदविद्भगवान् कल्की पातालशयनः प्रभुः ॥२९६॥
प्रादुर्भावगणो मुख्य इत्युक्तस्ते समासतः ।
यथाक्रमोदितानां च देवानां विनियोग तु ॥२९७॥
पिण्डमन्त्रगणे मत्तः सावधानेन चेतसा ।
नाभेरष्टमबीजं यत् स्थितं तत्सप्तमोपरि ॥२९८॥
तदधश्चोत्तरं चाक्षादरान्तेन विभूषयेत् ।
अधोत्तरं चाक्षदेशादादाय तदधो न्यसेत् ॥२९९॥
बीजं नेमिद्वितीयं यन्मध्यान्मध्यं सदासने ।
अधारपद्मसंरुद्धं कुर्याद्वै नाभि सप्तमम् ॥३००॥
अष्टमं च तदूर्ध्वे तु एतद्धि तृतीयकम् ।
नाभ्यष्टममथादाय अरात् पद्मासनस्थितम् ॥३०१॥
ततो नाभिद्वितीयस्य क्रमेणाधो निवेश्य च ।

तदुद्देशात् तृतीयं च सप्तमं तुयमेव च ॥३०२॥
अधादाय च नेमे प्राक् तदधो नाभिसप्तमम् ।
तस्याप्यधस्तदुद्देशात् तृतीयं विनिवेश्य च ॥३०३॥
ततस्तु नवमं नाभेस्तस्योर्ध्वाधोगतं न्यसेत् ।
तत्रैव यद्वितीयं तु तत्पिण्डं विद्धि सप्तमम् ॥३०४॥
अरात् षष्ठस्य चोर्ध्वे तु नाभिपूर्वं तु विन्यसेत् ।
सप्तमं चाष्टमं चापि त्युपर्युपरि वै क्रमात् ॥३०५॥
अधाष्टमं नाभिदेशादारूढं सप्तमोपरि ।
तदधो मध्यगं चाक्षान्नवमं परिकीर्तितम् ॥३०६॥
भूयोरात्षष्ठमस्योर्ध्वं दद्यान्नाभितृतीयकम् ।
चाद्यात्तृतीयं तन्मूर्ध्नि पिण्डोऽयं दशमः स्मृतः ॥३०७॥
द्वितीयं नाभिदेशाच्च तत्तृतीयं तदूर्ध्वगम् ।
नेमेराद्यन्तमूर्ध्वे तु स्मृतमेकादशं त्विदम् ॥३०८॥
अधो नाभिचतुर्थस्य सप्तमं विनिवेश्य च ।
तदधो नेमिपूर्वं तु एतद्द्वादशमं स्मृतम् ॥३०९॥
नेमेस्त्रिदशमादाय तदधो योजयेत्क्रमात् ।
सप्तमं च चतुर्थं च पूर्वं नाभेर्महामते ॥३१०॥
अरषष्ठामना सर्वं पिण्डमेतत् त्रयोदशम् ।
नाभेश्चतुर्थमादाय तदूर्ध्वे सप्तमं न्यसेत् ॥३११॥
नवमं चापि तन्मूर्ध्नि एतद्विद्धि चतुर्दशम् ।
नेमेश्चतुर्थसप्तस्य ऊर्ध्वाधोभ्यां निवेश्य च ॥३१२॥
वर्णं नाभिद्वितीयं चपरपञ्चदशं स्मृतम् ।
यद्वितीयमध्यकं चाद्यादादाय नाभ्यमण्डलात् ॥३१३॥
सान्निमेन च षष्ठेन युक्तं कुर्यादनन्तरम् ।
नेमे सप्तमवर्णस्य ऊर्ध्वाधोभ्यां निवेश्य च ॥३१४॥

नाभिदेशाद्द्वितीयं यद्विद्धि सप्तदशं तु तत् ।
नवमं नाभिदेशाच्च सप्तमस्योपरि न्यसेत् ॥३१५॥
अथाष्टमं नाभिदेशात्कुर्यात्सप्तगमूर्ध्वगम् ।
द्वितीयमपि तस्याधस्तस्माद्वै नाभिमण्डलात् ॥३१६॥
अरात्त्रयोदशं चोर्ध्वे न्यूनविंशतिमं हि तत् ।
नाभेश्चतुर्थं तस्योर्ध्वे तत्तृतीयं तदूर्ध्वगम् ॥३१७॥
तत्रैव सप्तमं यद्वै विद्धि विंशतिमं त्विदम् ।
द्वितीयस्याष्टमं नाभेर्वर्णस्योर्ध्वे नियोज्य च ॥३१८॥
अरात् षष्ठं च तस्याधः कुर्यात्तदनु लाङ्गलिन् ।
नवमं नाभिदेशाच्च तृतीयस्योपरि न्यसेत् ॥३१९॥
द्वितीयं तदध. कुर्या त्रयोविंशतिमं शृणु ।
अष्टमं सप्तमं नाभेर्द्वितीयं प्रथमं ततः ॥३२०॥
क्रमेण योजयेच्चैव अरात् पञ्चस्य मूर्धनि ।
नेमेस्सप्तममादाय तदधो नाभिसप्तमम् ॥३२१॥
तत्तृतीयं च तस्याधश्चतुर्विंशतिमं स्मृतम् ।
नाभेस्तृतीयं तस्योर्ध्वे द्वितीयं तस्य चोपरि ॥३२२॥
निवेश्य नेमिपूर्वं तु षड्विंशमधुनोच्यते ।
अरात् षष्ठासनं कुर्याद्वर्णं नाभितृतीयकम् ॥३२३॥
तदूर्ध्वे सप्तमं चैव अतोन्यमवधारय ।
न्यून विंशतिनेमेस्तु तस्योर्ध्वाधोगतं न्यसेत् ॥३२४॥
सप्तमं नाभिवर्णेभ्यस्त्वरवर्णाच्च पञ्चमम् ।
नेमेराद्यं द्वितीयं च आदाय तदधो न्यसेत् ॥३२५॥
मध्यमक्षान्महाबुद्धे अष्टाविंशतिमं स्मृतम् ।
नवम सप्तमं नाभेस्तृतीयं च द्वितीयकम् ॥३२६॥
अथोत्तरस्त्वमक्षाच्च आदाय तदधो न्यसेत् ।

सर्वं साधारमुद्दिष्टं सैहमन्त्रोदितं मया ।
दीक्षापूर्वं हि मन्त्राणां चतुर्वर्गं हि साधनम् ॥२४०॥
लक्षणं पदमन्त्राणामथेदानीं निबोधतु ।
यैर्विना लब्धसत्तानामर्चनं हि न जायते ॥२४१॥
विश्वातीताय विमलपदं विद्याविधायिने ।
पद्मनाभाय विश्वव्यापिने च तदनन्तरम् ॥२४२॥
चतुर्विंशाक्षरं विद्धि एतत्संख्यं परंशृणु ।
ज्योतीरूपाय पञ्चार्णं पदं गगनमूर्तये ॥२४३॥
ध्रुवाय दद्यात्तदनु परमं त्र्यक्षरं ततः ।
पदमामिचतुर्वर्णं हेतवे त्र्यक्षरांत्विति ॥२४४॥
अनन्तायपदंदद्याच्चतोपरिमिताय च ।
सर्वाश्रयाय तदनु तदन्ते धृतशक्तये ॥२४५॥
एतद्विंशतिसंख्यं च द्वाविंशार्णमतः शृणु ।
नमो भगवते कृत्वा वासुदेवाय वै ततः ॥२४६॥
सर्वशक्त्यात्मनेऽनन्तमूर्तये तु पदन्त्विति ।
वीर्यात्मनो महाशब्दं पुरुषाय पदं तु तत् ॥२४७॥
मोहमायापदं चैव ततो विध्वंसिने तु वै ।
रागोदितायशब्दं तु सर्वशक्ते पदं ततः ॥२४८॥
नियोक्तव्यश्चतुर्वर्णः शतविंशाक्षरःस्मृतः ।
पदं वेदविदे विश्वरजवाय ततो भवेत् ॥२४९॥
तदन्ते विश्वपतये ततो वै परमात्मने ।
एष विंशतिभिर्वर्णैः शृणु सप्तदशाक्षरम् ॥२५०॥
ज्ञानात्मनेपदंपुर्यात्मविच्छन्दमनःपरम् ।
पद प्रकाशाद्याय शान्तरूपाय वै नमः ॥२५१॥
अनन्तशक्ये सर्वव्यापिने तदनन्तरम् ।

तृतीय च द्वितीय च नाभिदेशादनन्तरम् ॥३२७॥
नाभिद्वितीयमादाय सप्तम तुर्यमेव च ।
तृतीयस्याथ वै नाभेर्वाह्यादाद्यन्तमूर्ध्वगम् ॥३२८॥
ततस्तु नवम नाभेरक्षमध्यसमूर्ध्वगम् ।
अष्टमस्याथ वै नाभेरध ऊर्ध्वे द्वितीयकम् ॥३२९॥
दद्यात्तदन्तरालस्थ तस्यैवाधोगत तु वै ।
अरात् षष्ठस्य चोर्ध्वेथ नाभिपूर्वं तु तत्परम् ॥३३०॥
विनिवेश्याष्टम चापि षट्त्रिंशमवधारय ।
सप्तम च तृतीय च चतुर्थं नाभिमण्डलात् ॥३३१॥
योजयित्वा तदूर्ध्वे त्वप्यराणं त्रिदश न्यसेत् ।
अथ यन्नवम नाभेस्तृतीय च द्वितीयकम् ॥३३२॥
तत्सप्तत्रिंशक विद्धि नाभिदेशादथाहरेत् ।
अरात् षष्ठासन पूर्वं द्वितीय च तदूर्ध्वत ॥३३३॥
नवम चापि तस्योर्ध्वे पिण्डाष्टित्वत्यादिम विना ।
अरान्ताद्येन वै मूर्ध्ना सर्वे कार्या ह्यलङ्कृता ॥३३४॥
नमोन्ता प्रणवाद्याश्च युक्तास्मन्त्रपदैस्स्वकै ।
अरान्ताद्य विना यस्य यदूर्ध्वे वर्तते स्वर ॥३३५॥
अधो वा नाभिपूर्वेण सह वा केवल स्थितम्।
अप्यस्य च तत कुर्यात्सर्वेषा पूजनाय च ॥३३६॥
स्वेन स्वेन तु पिण्डेन सिद्धवच्चाङ्गकल्पनाम् ।
नम प्रणवसज्ञाद्या जाति कर्मवशात्पुन ॥३३७॥
आतद्युक्तानुषजनान्मोक्षनिष्ठस्समाचरेत् ।
बीजपिण्डपदोत्थाना विनियोग तु चाखिलम् ॥३३८॥
किन्त्वेषा वैभवी मुद्रा देवाराधनकर्मणि ।
तदङ्गमुद्राश्चान्ताना योज्या मन्त्रैस्स्वकैस्स्व ॥३३९॥

सर्वं साधारमुद्दिष्टं सैहमन्त्रोदितं मया ।
दीक्षापूर्वं हि मन्त्राणां चतुर्वर्गं हि साधनम् ॥३४०॥
लक्षणं पदमन्त्राणामथेदानीं निबोधतु ।
यैर्विना लब्धसत्तानामर्चनं हि न जायते ॥३४१॥
विश्वातीताय विमलपदं विद्याविधायिने ।
पद्मनाभाय विश्वव्यापिने च तदनन्तरम् ॥३४२॥
चतुर्विंशाक्षरं विद्धि एतत्सख्यं परं शृणु ।
ज्योतीरूपाय पद्मार्णं पदं गगनमूर्तये ॥३४३॥
ध्रुवाय दद्याच्चदनु परमं त्र्यक्षरं ततः ।
पदमाभिचतुर्वर्णं हेतवे त्र्यक्षरं त्विति ॥३४४॥
अनन्तायपदंदद्याच्चतोपरिमिताय च ।
सर्वाश्रयाय तदनु तदन्ते धृतशक्तये ॥३४५॥
एतद्द्विशतिसंख्यं च द्वाविंशार्णमतः शृणु ।
नमो भगवते कृत्वा वासुदेवाय वै ततः ॥३४६॥
सर्वशक्त्यात्मनेऽनन्तमूर्तये तु पदं त्विति ।
वीर्यात्मनो महाशब्दं पुरुषाय पदं तु तत् ॥३४७॥
मोहमायापदं चैव ततो बिम्बसिने तु वै ।
सदोदितायशब्दं तु सर्वशक्ते पदं ततः ॥३४८॥
नियोक्तव्यश्चतुर्वर्णः सप्तविंशाक्षरं स्मृतं ।
पदं वेदविदे विश्वरञ्जकाय ततो भवेत् ॥३४९॥
तदन्ते विश्वपतये नमो वै परमात्मने ।
एष विंशतिभिर्वर्णैः शृणु सप्तदशाक्षरम् ॥३५०॥
अनाम्नेनेपदमुपात्तविच्छब्दमतः परम् ।
परं महाशानयाय शान्तरूपाय वै ततः ॥३५१॥
अनन्तशक्तये सर्वव्यापिने तदनन्तरम् ।

तृतीय च द्वितीय च नाभिदेशादनन्तरम् ॥२२७॥
नाभिद्वितीयमादाय सप्तम तुर्यमेव च ।
तृतीयस्याथ वै नाभेर्याद्यादायन्तमूर्ध्वगम् ॥२२८॥
ततस्तु नवम नाभेरक्षमध्यस्थमूर्ध्वगम् ।
अष्टमस्याथ वै नाभेरध ऊर्ध्वे द्वितीयकम् ॥२२९॥
दद्याद्यदन्वरात्पष्ठ तस्यैवाधोगत तु वै ।
अरात् पष्ठस्य चोर्ध्वेथ नाभिपूर्वंतु तत्परम् ॥२३०॥
विनिवेश्याष्टम चापि षट्त्रिंशमवधारय ।
सप्तम च तृतीय च चतुर्थं नाभिमण्डलात् ॥२३१॥
योजयित्वा तदूर्ध्वे त्वष्टराणं त्रिदश न्यसेत् ।
अथ यन्नवम नाभिस्तृतीय च द्वितीयकम् ॥२३२॥
तत्सप्तत्रिंशक विद्धि नाभिदेशादथाहरेत् ।
अरात् पष्ठासन पूर्वं द्वितीय च तदूर्ध्वत ॥२३३॥
नवम चापि तस्योर्ध्वे पिण्डास्त्वित्यादिम विना ।
अरान्तायेन वै मूर्धा सर्वे कार्या ह्यल्कृना ॥२३४॥
नमोन्ता प्रणवाद्याश्च युक्तास्सज्ञापदैस्स्वकै ।
अरान्ताद्य विना यस्य यदूर्ध्वे वर्तते स्वर ॥२३५॥
अधो वा नाभिपूर्वेण सह वा केवल हितम्।
अपास्य च तत कुर्यात्सर्वेषा पूजनाय च ॥२३६॥
स्वेन स्वेन तु पिण्डेन सिद्धवच्चाह्नकल्पनाम् ।
नम प्रणवसज्ञात्मा जाति कर्मवशात्पुन. ॥२३७॥
आनदुक्तानुयजनात्मोक्षनिष्ठस्समाचरेत् ।
बीजपिण्डपदोत्थाना विनियोग तु चाभिन्नम् ॥२३८॥
क्रियेषा वैभवी मुद्रा देयागमनकर्मणि ।
सदक्षमुद्राश्चाह्वाना योज्या मन्त्रैस्स्वकैस्सह ॥२३९॥

सर्वं साधारमुद्दिष्टं सैंहमन्त्रोदितं मया ।
दीक्षापूर्वं हि मन्त्राणां चतुर्वर्गं हि साधनम् ॥३४०॥
लक्षणं पदमन्त्राणामथेदानीं निबोधतु ।
यैर्विना लब्धसत्तानामर्चनं हि न जायते ॥३४१॥
विश्वातीताय विमलपदं विद्याविधायिने ।
पद्मनाभाय विश्वव्यापिने च तदनन्तरम् ॥३४२॥
चतुर्विंशाक्षरं विद्धि एतत्संख्यं परंशृणु ।
ज्योतीरूपाय पञ्चार्णं पदं गगनमूर्तये ॥३४३॥
ध्रुवाय दद्यात्तदनु परमं त्र्यक्षरं ततः ।
पदमासिचतुर्वर्णं हेतवे त्र्यक्षरंत्विति ॥३४४॥
अनन्तायपदंदद्यात्ततोपरिमिताय च ।
सर्वाश्रयाय तदनु तदन्ते धूलशक्तये ॥३४५॥
एतद्विंशतिसंख्यं च द्वाविंशार्णमतः शृणु ।
नमो भगवते कृत्वा वासुदेवाय वै ततः ॥३४६॥
सर्वशक्त्यात्मनेऽनन्तमूर्तये तु पदंत्विति ।
वीर्यात्मनो महाशब्दं पुरुषाय पदं तु तत् ॥३४७॥
मोहमायापदं चैव ततो विध्वंसिने तु वै ।
सदोदितायशब्दं तु सर्वशक्ते पदं ततः ॥३४८॥
नियोक्तव्यश्चतुर्वर्णः सप्तविंशाक्षरःस्मृतः ।
पदं वेदविदे विश्वरञ्जकाय ततो भवेत् ॥३४९॥
तदन्ते विश्वपतये ततो वै परमात्मने ।
एष विंशतिभिर्वर्णैः शृणु सप्तदशाक्षरम् ॥३५०॥
ज्ञानात्मनेपदंपुर्यात्मंविच्छब्दमतःपरम् ।
पर प्रकाशाशयाय शान्तरूपाय वै ततः ॥३५१॥
अनन्तशक्तये सर्वव्यापिने तदनन्तरम् ।

जगन्मयाय तदनु विश्वरूपाय वै पदम् ॥३५२॥
एकविंशतिभिर्वर्णैरयमुक्तोपरश्शृणु ।
सत्त्वसत्त्वपदमादाय गुहाशयपदं ततः ॥३५३॥
ततः परमहंसाय ततो मानसचारिणे ।
न्यूनविंशत्यक्षरश्चैव ततो यज्ञमूर्तये ॥३५४॥
पदमादाय तदनु विश्वान्तर्यामिने तु वै ।
ततो भुवनशब्दं तु वराहाय पदं तथा ॥३५५॥
विभुनिम्बामिने चेति चतुर्विंशाक्षरस्त्वयम् ।
नमो भगवते दद्यात्ततो वै वटधामये ॥३५६॥
जगज्ज्वलेन्धनपदं प्रदीप्त पदमेव तु ।
वीर्यायफट् तदन्ते तु एतत्मन्त्रयमस्त्वयं स्मृतः ॥३५७॥
सर्वान्तश्चारिणे दद्यात्प्रसन्नपदमेव च ।
मूर्तयेच पदं चैव दद्याद्धर्मात्मने पदम् ॥३५८॥
षोडशाक्षरमेतद्धि अतो गुह्यमनश्शृणु ।
सर्वविद्येश्वरायाथ दद्याद्वाक्पतये ततः ॥३५९॥
पदपदवमादाय ततो वाग्विभव इतीति ।
मुग्विंशाक्षरो ह्येष त्वपरं कथयामि ते॥३६०॥
योगैश्वर्यप्रदायाथ योगनिद्रारसाय च ।
नीरदाय पदं दद्याद्भगवन् जलशायिने ॥३६१॥
त्रिरष्टवर्णसम्यश्च अयमेकाधिकस्तु वै ।
भगवत्पदमादाय ज्ञानशक्तये ॥३६२॥
ॐ नमो मयाय भुवनधृतेथ व्यक्षरं पदम् ।
तदन्ते विनियोक्तव्यं पदं वै स्वच्छपात्मने ॥३६३॥
षड्विंशार्णकम विद्धि मन्त्र मन्त्रविदां वर ।
यज्ञाधिदेहमादाय महापरमतः परम् ॥३६४॥

वराहाय ततो दद्यात्पुराणपुरुषाय वै ।
दद्यात्तत प्रजाशब्द तदन्ते पतयेपदम् ॥३६५॥
चतुर्दिशाक्षर मन्त्रमेतन्मन्त्रविदा वर ।
नमो भगवते कृत्वा नारसिंहाय वे तत ॥३६६॥
तेजोनिधे पद दद्यात्पद हन हनेति च ।
ततो विकर्मजात्य वै शब्दपञ्चाक्षर भवेत् ॥३६७॥
दुष्कृत हि तदन्ते वै सप्तविंशाक्षरस्त्वयम् ।
आदायामृतमूर्ते वे ततो ज्ञानपरात्मने ॥३६८॥
सर्वेश्वराय भगवन्न्यूनविंशाक्षरस्त्वयम् ।
आदायपुण्डरीकाक्ष पद वै परमेश्वर ॥३६९॥
ततस्सकलशब्दतु सुखसौभाग्य वै पदम् ।
निधे वाञ्छितशब्द तु ततस्सिद्धिप्रदेति वै ॥३७०॥
पदं चाखिलदु खेति ततस्तु शमनाप्रये ।
आनन्दसुन्दरपद ततो लक्ष्मीपद न्यसेत ॥३७१॥
पतये शब्दमुच्चार्य पञ्चाशार्णं त्रिरुज्झितम् ।
सदसत्पवमादाय मूर्तये तदनन्तरम् ॥३७२॥
विश्वोत्तमाय सदनु ततोऽमृतनिधे तु वे ।
षोडशार्णस्त्वयमन्त उक्त कान्तात्मने विभो ॥३७३॥
पुरुषोत्तमाय शब्दतु ततो ऽप्रतिहतेति च ।
शक्तयेथ पद दद्यात्सर्वेश्वरपद तत ॥ ७४॥
समस्तेप्रहयेत्यत्र निवारण तत परम् ।
सप्तविंशाक्षरो मन्त उक्तश्चात पर शृणु ॥३७५॥
नियन्तेपदमुद्धृत्य तदन्ते विश्वहेतवे ।
परब्रह्मसमेत च सेतवे ओमनन्तरम् ॥३७६॥
स नो द्विरष्टवर्णश्च कथितोय तत परम् ।

पदमप्रतिमेत्यादौ प्रभाव तदनन्तरम् ॥३७७॥
महाविभूते तदनु महामायापद तत ।
अथ दर्शकशब्द तु तदन्ते तालकेतवे ॥३७८॥
चतुर्दिशाक्षरो मन्त्रस्त्वयमुक्तस्समासत ।
शान्तात्मने पद दद्यात्तदन्तेयमविन्यसेत ॥३७९॥
नियमाश्रयाय तद्द्द्यात्परमब्रह्मयाय च ।
नारायणाय शब्द तु पूर्वसत्यासम स्मृतम् ॥३८०॥
भवभङ्गपद चैव कारिणे तदनन्तरम् ।
ततो भगवते शब्द दत्तात्रेयाय वै तत ॥३८१॥
वर्णाश्रमपद नाथ धर्मशब्दमत परम् ।
परिग्रहाय प्रणवमष्टाविंशाक्षर स्मृत ॥३८२॥
सलोम्मायामायेति सर्वज्ञाय पद तत ।
(शब्द विश्वात्मने चाथ विमलेतिपद तत ॥३८३॥
सर्वेश्वराय न्यग्रोधशयनाय पद त्वथ ।
त्रयोविंशत्यक्षरश्च त्वथचान्य निबोधतु ॥३८४॥
भूतशब्दमथादाय भावनाय पद तत ।)
शब्द विश्वात्मने चाथ विमलेतिपद तत ॥३८५॥
निकेतनाय तदनु कन्धरायपद तत ।
अथ विंशतिभिर्वर्णैर्द्धाधिकैर्मन्त्रराट्स्मृत ॥३८६॥
विष्णवे पदमादाय निरञ्जनाय वै तत ।
पद प्रपन्नवत्साय जटिने दण्डिने तत ॥३८७॥
मधावद्विदिनशब्द वै तदन्ते विभवाय च ।
षड्विंशार्णन्तयमन्त्र पञ्चम्माभिबोधतु ॥३८८॥
सर्वान्तर्यामिने पदाय व्यापिने तदनन्तरम् ।
पद सहस्रार्चिषे च दद्यात्पाक्षर शुभम् ॥३८९॥

त्रिविक्रमायाथ पदं ततोपरिमिताय वै ।
प्रभावायपदं दद्यात्तूयोविंशाक्षरः स्मृतः ॥२९०॥
नरनाथाय शब्दं तु पुरुषप्रवराय वै ।
आत्मध्यानपरायेति णाय वै द्व्यक्षरं ततः॥२९१॥
एकविंशाक्षरो मन्त्रस्त्वतोन्यमवधारय ।
नारायणाय शब्दं तु दद्यान्निरिति वै पदम् ॥२९२॥
शयानन्दमयायेति पदं निरभिमान वै ।
पदसत्काय तदनु पञ्चविंशाक्षरस्त्वयम् ॥२९३॥
पराय पदमादाय ततो वै परमात्मने ।
योगेश्वराय हरये मन्त्रोयं षोडशाक्षरः ॥२९४॥
सप्तार्णं पदमादाय प्राङ्नमः परमात्मने ।
कृष्णाय शब्दं तदनु कमलं व्यक्षरं ततः ॥२९५॥
दळशब्दं तु विततं नेत्राय तदनन्तरम् ।
नृसिंहाय ब्रह्मणे वै अष्टाविंशाक्षरस्त्वयम् ॥२९६॥
भगवत्पदमादाय युगान्तदहनेति च ।
ह्तयेथ पद दद्यात्संसारपदमेव हि ॥२९७॥
बन्धविच्छेदकर्त्रे वै द्वाविंशार्णस्त्वयं स्मृतः ।
दद्याद्विशदशब्दं वै परमार्थपदं ततः ॥२९८॥
पदं चतुर्मूर्तये वै चतुर्गतिमयाय च ।
शरशार्ङ्गभृते दद्याच्छरादिन्दीवरत्विषे ॥२९९॥
ततो भगवते दद्यादभिरामपदं ततः ।
शरीरायपदं चैव त्वष्टत्रिंशाक्षरं स्मृतम् ॥३००॥
दद्याद्विशदशब्दंवै परमार्थपदं ततः ।
ततो वेदविदे शब्दं विदुषे व्यापकाय च ॥३०१॥
स्वामिन्तदनु वै दद्याद्यक्षरं चापरं पदम् ।

अथ विंशतिभिर्वर्णैरुक्तस्त्वन्यमतश्शृणु ॥४०२॥
दद्याद्गरुडशब्दं तु तदन्ते वाहनेति च ।
सर्वगसाक्षीचेतेति शम्याशुभमेव च ॥४०३॥
ततोधुनधुनादाय कर्मबन्धांस्तथोच्चरेत् ।
धर्मं पाहि ततोदद्याज्जह्यधर्मं ततोद्धरेत् ॥४०४॥
चतुस्त्रिंशाक्षरो मन्त्र एष वक्ष्याम्यतः परम् ।
सहारमूर्तये शब्दं कालवैश्वानरार्चिषे ॥४०५॥
पाताळशयनायेति त्वज्ञाननिगळेतिवै ।
निचय हन वीप्सातः प्रणवं तदनन्तरम् ॥४०६॥
पञ्चत्रिंशाक्षरो ह्येष सर्वसिद्धिकरः स्मृतः ।
प्रणवालकृतास्सर्वे नमस्कारविभूषिताः ॥४०७॥
सम्कृताः पूजिताश्चैव ध्यानजप्ता विशेषतः ।
तत्रास्ति यच्च यच्छन्ति भक्त्यासत्कर्मणाभुवि ॥४०८॥
अथ लाञ्छनमन्त्राणां शास्त्राणां लक्षणं शृणु ।
सहस्रदीधितिपदं दद्याच्चुरितं वै ततः ॥४०९॥
विग्रहाय दशार्णं च त्र्यधिकं मकुटस्य च ।
आदाय वाञ्छितपदं तदसिध्यप्रदाय वै ॥४१०॥
महाचिन्तापददद्यान्मणये तदनन्तरम् ।
विद्धि पञ्चदशार्णं च दशार्णमपरं शृणु ॥४११॥
सर्वलक्षणशब्दं तु तनम्सम्पत्प्रदायवै ।
सौभाग्यशब्दमादाय जननि त्र्यक्षरं ततः ॥४१२॥
सर्वमेदेतु तदनु अथमेव दशाक्षरम् ।
प्राणात्मनेथ सत्याय विद्धि सप्ताक्षरं त्विदम् ॥४१३॥
कान्त्यर्थे नमाय षडर्णं प्रदर्शितम् ।
त्रिधा मनो पदं दद्यादनो विश्वदाय च ॥४१४॥

नवाक्षरमिदं विद्धि परमष्टाक्षरं शृणु ।
समादाय पदं विघ्ने ततो विघ्नेश्वरार्चिते॥४१५॥
प्राक्छब्दमूर्तये कुर्याच्छब्दश्चायाष्टाक्षरः स्मृतः ।
पदं रमनिधि कुर्याद्धीमशब्दमतःपरम् ॥४१६॥
श्रीपणाय तदन्ते वै दशाक्षरमिदं स्मृतम् ।
प्राग्भुवनाधिपतये स्तम्भमूलाय वै पदम् ॥४१७॥
त्रयोदशाक्षरं विद्धि ततोन्यमवधारय ।
पदमिन्द्रियकोशाय डम्बराय दशाक्षरम् ॥४१८॥
कल्पान्तानिळघोषाय विद्युत्प्रसित वै पदम् ।
प्रभाय षोडशार्णं तु नवाक्षरमतश्शृणु ॥४१९॥
महामायापदं दद्याद्-धर्मणद्वयं ततः ।
ध्वंसिने पदमादाय एतत्सर्वं परं शृणु ॥४२०॥
सर्वाखप्रसनादाय पराय तदनन्तरम् ।
सन्तापकाय शब्दं तु दर्पविध्वंसिने ततः ॥४२१॥
एकादशाक्षरंविद्धि नवाक्षरमथोच्यते ।
अज्ञानखण्डनपदं पराय तदनन्तरम् ॥४२२॥
त्रैलोक्यमोहनपदं मूर्तये तु नवाक्षरम् ।
सर्वाकर्षणकरपदं महामायामयेति वै ॥४२३॥
द्वादशाक्षरसंख्यस्तु नवाक्षरमथोद्धरेत् ।
प्रागखण्डितशब्दतु तदन्ते विनियोज्य च ॥४२४॥
पराक्रमाय शब्दं तु सप्ताक्षरमतश्शृणु ।
दर्पप्रशमकर्त्रे तु पश्चार्णं विनियोग वै ॥४२५॥
तेजोमालिनि चेत्येते द्वाविंशत्यनुकीर्तिताः ।
प्राग्वदाद्यन्तसंरुद्धा स्वनामपदभूषिता. ॥४२६॥
सेव्यानिष्टाश्रम्यान्ते दद्यात्संज्ञापदं सदा ।

चन्द्रवच्चास्त्रमन्त्राणां कुर्यान्नामावसानकम् ॥४२७॥
क्रमाच्चतुर्दशानान्तु शक्त्यन्तानां च पट्पदम् ।
अथ वक्ष्ये नृसिंहस्य विश्वत्रातुर्मनूत्तमम् ॥४२८॥
वर्णचक्रं तु पूर्वोक्तं सुगुप्ते वसुधातले ।
उपरिष्टात् तु संलिख्य पूजयित्वा यथाविधि ॥४२९॥
समुद्धरेत्ततो मन्त्रमनेकाद्भुतविक्रमम् ।
प्रणवं पूर्वमादाय तदन्ते विनियोज्य च ॥४३०॥
नवमं नाभिवर्णेभ्यस्तदूर्ध्वेराच्चतुर्दशम् ।
तस्योपरि तदन्तस्थवर्णं गोऽरवन्न्यसेत् ॥४३१॥
नमोऽन्तवर्णमेतद्धि वाचकं परमात्मनः ।
ज्ञानादयो गुणाष्षड्भ्यः प्रागुक्ता हृदयादयः ॥४३२॥
तदर्धमेव वर्णं त पोढा संलिख्य केवलम् ।
द्वितीयतुर्यषष्ठैश्च द्वादशेनान्तिमेन च ॥४३३॥
चतुर्दशेनाराद्दर्गात्त्माद्धं विनियोजयेत् ।
बीजवच्छिरसा सर्वान् लाञ्छयेत्पञ्चमं विना ॥४३४॥
सर्वेषां प्रणवं पूर्वं स्वसंज्ञान्ते नियोज्य च ।
स्वर्गीया जातयश्चान्ते वोषडन्ता क्रमेण तु ॥४३५॥
ओंनमो भगवते नारसिंहायेत्यनेन तु ।
द्वादशाक्षरमन्त्रेण स्मृतना विग्रहवत्पुरा ॥४३६॥
समाद्यभ्यन्तरस्थेन सान्निध्येन पूजयेत् ॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
मन्त्रोद्धारविधिर्नाम
त्रयोविंशोऽध्यायः ।

—०—

## अथ चतुर्विंशोऽध्यायः।

नारद ।

अथ मुद्राविधिं वक्ष्ये शृणुध्वं मुनिपुङ्गवाः ! ।
मुदं कर्मात्मतत्त्वानां ददात्यमलयाजिनाम् ॥१॥
द्रावयन्तिच दोषाणां बाह्याभ्यन्तरचारिणाम् ।
तेन मुद्रा समाख्याता कृतस्यापि च मुद्रणात् ॥२॥
तस्मात्स्वाभाविकीं कृत्वा बन्धं वा मानसं पुरा ।
स्वेन स्वेन तु मन्त्रेण स्मरेद्यात् सदैव हि ॥३॥
चैतन्येनानुविद्धो यश्शाखासयश्च यद्यपि ।
तत्रापि मन्त्रोत्राध्यक्षस्तत्कार्यं सम्प्रयच्छति ॥४॥
गन्धदिग्धौ करौ कृत्वा मुद्राबन्धं समाचरेत् ।
मध्यमानामिकाभ्यातु द्वन्द्वयुक्तः करद्वयात् ॥५॥
पराङ्मुखं च सुम्पष्ट कृत्वायोज्य परस्परम् ।
आमूलान्नगपर्यन्तं नैरन्तर्येण यत्नतः ॥६॥
समुत्ताने करतले शेषाश्चाङ्गुलयस्तथा ।
अधरोत्तरयोगेन वामदक्षिणतस्तथा ॥७॥
तर्जन्यामूर्ध्वतोंगुष्ठे सम्मुखे सम्प्रसार्य च ।
निविष्टा हृदये कार्या मुद्रेयं मुनिपुङ्गवाः ! ॥८॥
चातुरात्म्यार्चने योज्या सर्वसिद्धिप्रदायिनी ।
शिष्टौ निरशितौ हस्तौ योज्यौ च मणिबन्धनात् ॥९॥
तद्बाहुकूर्परौ द्वौ च नाभौ सरोध्य दण्डवत् ।
ईषद्बद्धे द्वे ऊर्ध्वस्थादप ऊर्ध्वं तु तौ करौ॥१०॥
गुप्तिं कृत्वा तु योज्यैषा मुद्राराधनकर्मणि ।
मूर्तीनां केशवादीनां ततोऽन्या शृणुत द्विजाः ! ॥११॥

श्लेष्य पाणितले द्वे प्राङ्नत्र कुर्याल्लतागणम् ।
निर्मुक्तमन्तरीकृत्य सन्ताङ्गुष्ठद्वयेन तु ॥१२॥
मणिबन्धद्वयं कुर्यात्सुसममतिनिश्चलम् ।
करयुग्मं सगर्भं तु सन्धार्य स्वप्रियाचलम् ॥१३॥
ऊरुमध्ये निषण्णे तु कुर्याद्द्वे बाहुकूर्परे ।
गुप्ता कृत्वा प्रयत्नेन बन्धमस्या समाचरेत् ॥१४॥
एषा विभवदेवाना मुद्रैका वैभवी द्विजा ।
प्रणवेन प्रयोज्येयं सद्मांशुसमप्रभा ॥१५॥
विश्वत्रातुर्नृसिंहस्य मुद्राद्वयमथोच्यते ।
ध्यात्वा तेनाभिरूपं तु दक्षिणाङ्गुलद्वयम् ॥१६॥
स्पष्टमूर्ध्वमुखं सैव ज्येष्ठाक्रान्ता कनीयसी ।
अथारिलाघवरूपा चाप्यध्वातीताभिरूपवृक् ॥१७॥
देवो गुणत्रयातीतस्तथा मार्गत्रयातिग ।
धर्मैस्थूलनरैर्मुक्तो योय व्यक्तो धियार्चित ॥१८॥
परम्परमुखौ श्लिष्टौ शाखाक्रान्तौ परस्परम् ।
किन्तु वै दक्षिणं हस्तमूर्ध्वं चाप्यपरेऽपरम् ॥१९॥
अविद्यादलनीयेष्या मुद्रा पूर्वमुदाहृता ।
ततो हृदादिमन्त्राणां मुद्राषट्कन्तु कथ्यते ॥२०॥
सम्पुटं हृदयोद्देशे बध्वा हस्तद्वयेन तु ।
निरन्तराभ्यां शाखाभ्यां मुद्रैषा हार्दधीस्मृता ॥२१॥
अङ्गुष्ठादि कनिष्ठान्त शाखायुग्मं पृथक् पृथक् ।
सान्तरं सम्पुटादस्मात्कनिष्ठायै तथा भवेत् ॥२२॥
शिरःशिखातनुत्रास्त्रनेत्रमुद्रा यथा क्रमम् ।
हस्तौ मुकुलितौ कृत्वा न्यसेच्छिरसि मन्त्रत ॥२३॥
इयं किरीटमुद्रेयं मार्तण्डशतसन्निभा ।

ततः श्रीवत्समुद्रा तु पद्ममुद्रैव कीर्तिता ॥२४॥
मध्यमानामिकान्यूना मुष्टिवत्पाणिमध्यगा ।
उभयोर्हस्तयोर्विप्र पश्चान्मुष्टिद्वय तु यत् ॥२५॥
श्लेषयेत्समरन्ध्रेण तर्जन्यौ द्वे प्रसार्य च ।
तत. संश्लेषयेदग्रादङ्गुष्ठाग्रे नियोजयेत् ॥२६॥
मध्यतस्तर्जनीभ्या तु अन्योन्येन क्रमेण तु ।
मुद्रैषा कौस्तुभस्योक्ता मालामुद्रामथो शृणु ॥२७॥
शाखाष्टक कराभ्या यद्ग्रस्तमग्रादपूरत. ।
संश्लिष्टं लम्बमान च उपविष्टोऽथ वा स्थितः ॥२८॥
कुर्याद्वाहुद्वय विप्र ऊरुम यावलम्बितम् ।
मणिबन्धावधौ सम्यङ्मालामुद्रा प्रकीर्तिता ॥२९॥
अङ्गुष्ठौ सङ्गतौ लग्नौ अङ्गुल्यो विरलास्थिता ।
प्राची ज्ञेया गवेन्मुद्रा पुष्टिसौभाग्यदायिका ॥३०॥
मुष्टिना ग्राहयेद्वाममंगुष्ठं दक्षिणेन तु ।
अंगुलीर्वामहस्तात्तु दक्षिणस्योपरि न्यसेत ॥३१॥
वामतर्जनिकाग्रं तु अगुष्ठाग्रं च दक्षिणात् ।
परस्पर सम्मुख तु सुश्लिष्ट विनियोजयेत् ॥३२॥
शङ्खस्यैषा भवेन्मुद्रा उत्तानातु यथा स्थिता ।
स्पष्टौ प्रसारिता हस्तौ परस्परनियोजितौ ॥३३॥
भ्रमणाच्चक्रवत्तौ तु चक्रमुद्रेति कीर्तिता ।
नाशिनी सर्वदुःखाना मुद्राणा मेदिनीपत ॥३४॥
बध्वा मुष्टिं दक्षिणेन वामाङ्गुष्ठस्य मूर्धनि ।
कृत्वैवं दर्शयेदेषा कौमोदक्याम्मुद्रयोगिना ॥३५॥
गदामुद्रेति विख्याता दोषसैन्यप्रमर्दिनी ।
प्रसार्या वाममुखाना अङ्गुल्यो विरलस्थिताः ॥३६॥

कार्यास्त्वाकुञ्चिता प्रान्तादङ्गुष्ठ सेतुवद्भवेत् ।
समुख तासु सलग्न करशाखासु मध्यत ॥३७॥
हृत्सम्मुखातु बध्नीयाच्छक्तिमुद्रा सुखप्रदाम् ।
प्रादिशिन्यादितो विद्धि कनिष्ठान्त क्रियादिषु ॥३८॥
प्रसार्य सहित कृत्वा पुरा पाणिद्वय द्विज ।
अनामामूलदेशाभ्यामङ्गुष्ठाग्रद्वय न्यसेत् ॥३९॥
अधोमुख तु पतित मणिबन्धस्य सम्मुखम् ।
सुस्पष्टमुन्नि कृत लग्न पुच्छवत्कन्यसायुगम् ॥४०॥
पक्षिराजस्य मुद्रेषा वैनतस्य महात्मन ।
सामान्या सर्वमन्त्राणामेषा मुद्राञ्जलि स्मृता ॥४१॥
स्वेन स्वेन तु मन्त्रेण सयुक्ता ता प्रयोजयेत् ।
दक्षे करतले रक्तपङ्कज भास्कर स्मरन् ॥४२॥
द्रव्याणि सस्पृशेत्तेन मुद्रैषा दहनात्मिका ।
वामहस्ततले श्वेतपङ्कजे शशिन स्मरन् ॥४३॥
द्रव्याणि सस्पृशेत्तेन मुद्रैषाप्यायनात्मिका ।
ग्रथितौ द्वौ करौ कृत्वा मुष्टिरौ चाप्यधोमुखौ ॥४४॥
कनीयसौ तदङ्गुष्ठौ मुक्तेवेण नियोज्य च ।
मध्यमाङ्गुलियुग्म तु अन्योन्यकरपृष्ठगम् ॥४५॥
निक्षिप्तानामिकायुग्म तर्जनीयुगळ तथा ।
मुद्रेषा कामधेन्वाख्या सर्वत्रा परिपूरिणी ॥४६॥
अथ चासनमन्त्राणा मुद्रासन्धस्तु वक्ष्यते ।
आमेमुरस्य वामस्य अनामा तर्जनी उभे ॥४७॥
आ[illegible] तु [illegible] मध्यमा तु मस्थिते ।
त[illegible] ॥४८॥
कनिष्ठिका तु साङ्गुष्ठा कार्या सुमहता मुने ।

अनन्तासनमुद्रेयं मन्त्रेणास्यायतो द्विज! ॥४९॥
सर्वं जगदिदं ह्येषा क्रोडीकृत्य च वर्तते ।
करद्वयमसंलग्नं कृत्वा तदनु योजयेत् ॥५०॥
मुखे मुखं तर्जनीभ्यां न मुञ्चेदथ मध्ययोः ।
कुर्यात्ताद‍ृग्विधं बन्धं तं त्यक्त्वानामिकाद्वये ॥५१॥
उपसंहृत्य तं चापि द्वे कनिष्ठे नियोजयेत् ।
प्रत्येकबन्धे संलग्नमंगुष्ठयुगळं न्यसेत् ॥५२॥
धर्मादेश्चाप्यधर्मादेरिद मुद्राचतुष्टयम् ।
तदूर्ध्वस्थस्य पद्मस्य प्रागुक्ता मन्त्रयोगतः ॥५३॥
दक्षिणस्य तु हस्तस्य तर्जन्यङ्गुष्ठमेळनम् ।
कृत्वा तदनु तद्बन्धं विकास्य च शनैश्शनैः ॥५४॥
समुत्थानं पृथक्कुर्याच्छाखासंघं पृथक् स्थितम् ।
धामलयस्य मुद्रैषा गणेशादेस्तथोच्यते ॥५५॥
वामहस्तकनिष्ठाद्यास्तिस्रस्स्वतलमध्यगाः ।
तासामंगुष्ठतः पृष्ठे तर्जनी प्रोन्नता भवेत् ॥५६॥
नासावंशप्रदेशस्था ततो दक्षिणपाणिना ।
अंगुळी त्रितयेनैव मुष्टिं बध्वा तु पूर्ववत् ॥५७॥
तर्जनीं द्विगुणीं कृत्य अंगुष्ठाग्रे नियोजयेत् ।
प्रोद्यतो दक्षिणोबाहुश्चक्रक्षेपे यथोचितः ॥५८॥
विष्वक्सेनस्य मुद्रैषा विघ्नसन्धनिकृन्तनी ।
संमुखौ सम्पुटीकृत्य द्वौ हस्तौ सम्प्रसारितौ ॥५९॥
विनियोज्यौ ललाटाग्रे शिरसावनतेन तु ।
गुर्वादित्रितयस्यैषा मुद्रा चेन प्रसादिनी ॥६०॥
करद्वयं समुत्तानं नाभिदेशे नियोजयेत् ।
वामस्य दक्षिणं पृष्ठे मुद्रैषा सिद्धसन्ततेः ॥६१

त्रैलोक्योद्धृतिदक्षेण युक्तः पाणिद्वयेन तु ॥७४॥
शान्तः सच्चित्स्वरूपस्तु भक्तानुग्रहकाम्यया ।
अनौपम्येन वपुषा ह्यमूर्तो मूर्ततां गतः ॥७५॥
विश्वमाप्याययन्कान्त्या पूर्णेन्दुयुततुल्यया ।
रश्मिभिर्भास्करो यद्वत्समुद्र इव वीचिभिः ॥७६॥
स्वमूर्तिभिरमुक्ताभिरच्युतादिभिरन्वितः ।
दीप्तिमद्भिरमूर्तैस्तु सुधाकल्लोलसन्नुतः ॥७७॥
पूर्ण आभरणैः सर्वैर्निर्विकाराग्निविग्रहः ।
ततः सुषुप्तिव्यूहस्य वक्ष्ये ध्यानमनुत्तमम् ॥७८॥
वेदकत्वेन भगवान् ब्रह्मसवलिताकृतिः ।
स्तम्भवत्कर्णिकामध्ये स्थित्वा वेद्यत्वमेति च ॥७९॥
स्वयमेवोपकाराय कर्मिणां ब्रह्मयाजिनाम् ।
प्राग्भागादुत्तरं यावद्गुणभेदेन लाङ्गलिन् ! ॥८०॥
विभजत्यात्मनात्मानं वासुदेवं परं प्रभुं ।
अनुज्झितस्वरूपस्तु प्राग्भागे षड्गुणात्मना ॥८१॥
बलसवलितेनैव ज्ञानेनास्तेऽथ दक्षिणे ।
ऐश्वर्येण च वीर्येण प्रत्यग्भागे प्रतिष्ठितः ॥८२॥
तेजश्शक्त्यात्मना सौम्ये सुस्थितः परमेश्वरः ।
यथास्वरूपो भगवान् व्यूहात्मा गुणलक्षणः ॥८३॥
अत्रापि पूर्वमेवोक्तं रूपमस्योपचर्यते ।
किं तु द्वितीयमूर्तेर्वै शुभे पाणितलद्वये ॥८४॥
स्फुटो रेखामयः शालः सुव्यक्तं लाङ्गलं महत् ।
स्यात्पुनः तृतीयस्य दक्षिणाश्रितः करः ॥८५॥
तुर्यस्यासिवरेणैव शङ्ख आभ्यां करद्वये ।
अवाङ्मुख करयशादूर्ध्ववक्त्रः स्वभावतः ॥८६॥

घर्मांशुरश्मिसन्तप्तशतधामाधिकेन तु ॥९९॥
रूपेण पश्चिमस्यां च व्यक्तः प्रद्युम्नसञ्ज्ञया ।
शरद्गगनसङ्काशवर्णेन परमेश्वरः ॥१००॥
समास्ते उत्तरस्यां चाप्यनिरुद्धात्मना ततः ।
सस्थान आदिमूर्तिर्वै सर्वेषां तु समः स्मृतम् ॥१०१॥
सूर्यकोटिप्रभाः सर्वे तेजसा कमलेक्षणाः ।
दन्तज्योत्स्नावितानैस्तु प्रकटीकृतदिङ्मुखाः ॥१०२॥
पूर्णचन्द्रायुताकारा मुक्ताहाराद्यलङ्कृताः ।
लसत्पीयूषसदृशै ग्वाम्बरैः स्रग्वरैर्युताः ॥१०३॥
वरायुधोद्यतकराः स्वकैश्चिह्नैरनुज्झिताः ।
लेखोत्थितैस्तु कल्हारैः पादपातलाङ्किताः ॥१०४॥
निमग्नजनसन्तापशमनव्यपृताननाः ।
करुणापूर्णहृदया जगदुद्धरणोद्यताः ॥१०५॥
स्वदेहतेजस्सम्भूतज्वालामण्डलमध्यगाः ।
एवमेवैष भगवान् सन्तर्प्य प्राक्प्रयोगतः ॥१०६॥
एकैकेन तु भागेन प्रभवेन क्रमेण तु ।
पुनरेवानिरुद्धादि प्राङ्मूर्त्यन्तं महामते ! ॥१०७॥
क्रमान्निरन्तरैर्भोगैरभ्यर्च्य परमेश्वरः ।
प्रणवाद्वितयेनैव बुध्या तु सुविशुद्धया ॥१०८॥
अप्ययाख्येन विधिना ह्ययागनिरतैर्बुधैः ।
ततस्तु जाग्रद्व्यूहस्य वक्ष्ये ध्यानक्रमं द्विजाः ! ॥१०९॥
अनन्तसरसि क्षार्णे विश्रान्तं यन्महामते ! ।
अकाराक्षरमूलं तु नित्यं सर्वाश्रयाम्बुजम् ॥११०॥
अकाराक्षरनालं तु शेषसर्वार्णपल्लवम् ।
दिगष्टकं समाश्रित्य यत्तु तिष्ठति चक्रवत् ॥१११॥

नाभिपद्ममध्ये भगवान् आसनेऽस्मिन् परे स्थित ।
मध्व्यां भावनीयश्च यथा तत्पुनोच्यते ॥११२॥
पर प्रणवसंज्ञेन सम्पूर्णं स्वेन तेजसा ।
स्थितस्या[illegible] च ॥११३॥
ततः प्रणवपूर्वं तु ब्रह्मबीजचतुष्टयात् ।
कदम्बपुष्पसदृशात्सर्वतो निर्गताङ्कुरात् ॥११४॥
विकसमेणोदितं धामद्विगोर्गिनचतुष्टयम् ।
सुव्यक्तलक्षणं मन्त्रं निर्भेद्यतावृत्तं बहिः ॥११५॥
स्फुलिङ्गकणतुल्येन समुद्भूतेन वै परात् ।
नादकान्तर्विनिविष्टेन व्यक्ततामागतेन च ॥११६॥
तताद्यं भगवद्रूपं हिमकुन्देन्दुकान्तिमत् ।
चतुर्भुजं सौम्यवक्त्रं पुण्डरीकनिभेक्षणम् ॥११७॥
पीतकौशेयवसनं सुवर्णध्वजशोभितम् ।
सुन्यदक्षिणहस्तेन भीतानामभयप्रदम् ॥११८॥
विद्याकोशस्तु वामेन सगृहीतश्च शङ्करात् ।
पृष्ठगे ह्यपरस्मिंस्तु प्रोद्यन् दक्षिणो त्वरि ॥११९॥
तथाविधे गदा वामे निषण्णा वसुधातले ।
सिन्दूरशिखराकारमेकवक्त्रं चतुर्भुजम् ॥१२०॥
अतसीपुष्पसङ्काशवासोभृत्तालाञ्छितम् ।
सव्येन पाणियुग्मेन तुल्यमाद्यस्य वै विभोः ॥१२१॥
सीरं तच्चक्रहस्तेऽस्य मुसलं तु गदाकरे ।
प्राद्युम्निशासमुदितस्यद्योतत्त्वयवीधिति ॥१२२॥
रक्तकौशेयवसनं मकरध्वजशोभितम् ।
गजवक्त्रं चतुर्बाहुं तृतीयं परमेश्वरम् ॥१२३॥
भरतमहस्त

वामे परस्मिन् शार्ङ्गं च दक्षिणे बाणपञ्चकम् ॥१२४॥
अञ्जनाद्रिप्रतीकाश सुसिताम्बरवेष्टितम् ।
चतुर्भुजं विशालाक्षं मृगलाञ्छनभूषितम् ॥१२५॥
आदिक्पाणियुगळनाद्यस्यापि कीर्तितम् ।
दक्षिणादिकमेणाथ द्वाभ्यां वै खड्गखेटको ॥१२६॥
वनमालाधरा सर्वे श्रीवत्सकृतलक्षणाः ।
शोभिता कौस्तुभेनैव रत्नराजेन वक्षसि ॥१२७॥
किरीटमकुटै रम्यैर्हारकेयूरनूपुरैः ।
ललाटतिलकैश्चित्रैः स्फुरन्मकरकुण्डलैः ॥१२८॥
स्रग्वैर्विविधैर्माल्यैः कर्पूराद्यैर्विलेपनैः ।
रम्यैरलङ्कृताश्चैव भावनीया सदैव हि ॥१२९॥
पुनरप्ययययोगेन प्रागुदङ्मध्यमे दळे ।
सितकृष्णेन वपुषा अनिरुद्धं स्मरेत्प्रभुम् ॥१३०॥
उदक्पश्चिममध्यस्थे प्रद्युम्नं भावयेच्छदे ।
रूपेण कृष्णपीतेन अप्ययावसरे तु वै ॥१३१॥
प्रत्यग्दक्षिणमध्यस्थे पीतरक्तवपुर्धरम् ।
स्मरेत्सङ्कर्षणं देवं प्रतिलोम क्रियाविधौ ॥१३२॥
मध्ये प्राग्दक्षिणस्था च सितरक्तेन तेजसा ।
वासुदेवो जगन्नाथो भावनीयो महामते ! ॥१३३॥
अथ शुद्धाम्बरत्वेन स्फटिकोपलपद्धिषु ।
स्थानभेदं समासाद्य सचकान्तिद्वयात्तु वै ॥१३४॥
गृह्णाति शबळं रूपमुपसंहारलक्षणम् ।
अभेदेनादिमूर्तेर्वै संस्थितं वटबीजवत् ॥१३५॥
सर्वक्रियाविनिर्मुक्तममूर्तं परमार्थतः ।
चातुरात्म्यं तदाद्यं वै शुद्धसंविन्मयं महत् ॥१३६॥

वह्न्यर्केन्दुसहस्राभमानन्दस्पन्दलक्षणम् ।
बीजं सर्वक्रियाणां यद्विरूपानां यदास्पदम् ॥१३७॥
चातुरात्म्यं तु तद्विद्धि द्वितीयममलेक्षणा! ।
नित्यं नित्याकृतिधरं तेजसा सूर्यवर्चसम् ॥१३८॥
भिन्नं सितादिभेदेन ऊर्ध्वाधः संस्थितेन च ।
कैवल्यभोगफलदं भवबीजक्षयङ्करम् ॥१३९॥
चातुरात्म्यं तृतीयं तु सुधासन्दोहसुन्दरम् ।
स्थित्युत्पत्तिप्रलयकृत्सर्वोपकरणान्वितम् ॥१४०॥
प्रकृतिं स्वामधिष्ठाय समुदेत्यस्तमेति च ।
चतुर्थं विद्धि तद्यस्य विश्वं तिष्ठति शासनात् ॥१४१॥
यच्चरिमितादिकं रूपं चतुर्थो यत्कृते युगे ।
रक्ताद्यं सितनिष्ठं च त्रेतायां हि महामते ! ॥१४२॥
पीतं कृष्णं सितं रक्तं सम्प्राप्ते द्वापरे युगे ।
कलौ कृष्णं सितं रक्तं पीतं चानुक्रमेण तु ॥१४३॥
युगमन्याचतुष्के तु निर्वर्ति परमेश्वरः ।
विभिन्नमूर्तिसामान्यं रूपं यच्चन्निबोध मे ॥१४४॥
पीतरक्तं कृतान्ते तु रक्तपीतमनः परम् ।
पीतकृष्णं च तदनु कृष्णशुक्लमनन्तरम् ॥१४५॥
भेदः प्रागुदितैर्ज्ञेय आद्युपान्त्यग्लाऊने ।
समत्वादन्यथा केन विभागो नावधार्यते ॥१४६॥
ततस्तु केशवादीनां ध्यानं वक्ष्ये मुनीश्वरा ! ।
सर्वगं परमं ज्योतिर्मूर्तममलं हि यत्॥१४७॥
स एव वासुदेवेति मत्वा सम्यग्यजेत्ततः ।
चेतसामृतसङ्काशैः पुष्पाद्यैरखिलैः प्रभुम् ॥१४८॥
प्रध्यातममलन्धाम ध्यायेन्मूर्तमनश्वरम् ।

श्रोणीतटार्पितकरं सानुकम्पमनूपमम् ॥१४९॥
दक्षिणेन तु हस्तेन भक्तानामभयप्रदम् ।
पुष्पाभरणवस्त्राढ्यं शङ्खचक्रद्वयान्वितम् ॥१५०॥
ततस्तस्मात्तु वै धाम्नो युगपत्नि सृतं स्मरेत् ।
महत् स्फुलिङ्गसङ्काशं समूहं सततोदितम् ॥१५१॥
तेन चाक्रमरवृन्दं समाक्रान्तं च भावयेत् ।
अथ प्रत्येकतेजोंशादुद्धृतं भावयेत्क्रमात् ॥१५२॥
त्रयं त्रयं सिताद्यं च केशवाद्यं चतुर्भुजम् ।
दक्षिणोत्तरपाणिभ्यां पूर्वतः केशवादिषु ॥१५३॥
युग्मं युग्मं परिज्ञेयं क्रमेणोर्ध्वगतं त्विदम् ।
शङ्खचक्रे कजं विद्या सा च शङ्खो गदाम्बुजम्॥१५४॥
तच्छङ्खं स कजं विद्या चक्रचक्रं गदागदा ।
शङ्खश्चक्रं कजं पद्मं चक्रं शङ्खस्ततो गदा ॥१५५॥
तद्द्वयोश्चासाभ्यामधरस्थं द्वयं द्वयम् ।
ज्ञेयं दामोदरान्तानां द्वादशानामिदं शृणु ॥१५६॥
पद्मं गदा ध्वनिश्चक्रं तत्पद्मो हेतिराट्ध्वनी ।
गदाचक्रं च तद्विद्या पद्मं दरश्च सोम्बुजम् ॥१५७॥
गदापद्मं गदा शङ्खं स विद्याम्बुरुहं त्वरि ।
भूयोधामगणात्तस्मात्सम्स्मरेन्निस्सृतं महत् ॥१५८॥
केशवादिविभागेन श्रियाद्यं च त्रयं त्रयम् ।
कमलादित्रयेणैव त्वन्योन्यत्वेन लाञ्छितम् ॥१५९॥
बद्धपद्मासनस्थं च दिग्विदिक्षु च समुत्थम् ।
सर्वीजयतु विनयाञ्चलेन मिनेन च ॥१६०॥
देवीद्वादशकं चैव तासां रूपमथोच्यते ।
पूर्णचन्द्राननाः सर्वाः सर्वर्तुकुसुमान्विताः ॥१६१॥

मन्त्रलक्षणसम्पूर्णा सर्वाभरणभूषिता ।
विद्रुमाभं त्रयं त्वाद्यमपरं चम्पकप्रभम् ॥१६२॥
प्रियङ्गुमञ्जरीश्यामं तृतीयं देवतात्रयम् ।
चतुर्थं त्रितयं ध्यायेज्जातिपुष्पसमप्रभम् ॥१६३॥
आद्याया कमलं पाणावन्यस्या हेतिराट्करे ।
शङ्खं ध्याये तृतीयस्यामेवं ध्यायेत्स्त्रिषु त्रिषु ॥१६४॥
ततो बिभर्त्युत्थाना ध्यानं वक्ष्ये द्विजोत्तमा ! ।
वैभवीयो महाबुद्धे ! देवतानिचयो महान् ॥१६५॥
य उक्तस्ते मया पूर्वमेकैकं विद्धि तं त्रिधा ।
चतुर्णां युगमन्वीनां युगानां च तथैव हि ॥१६६॥
विश्वविप्लवदोषाणां विनाशाय समुद्यतम् ।
सितरक्तादिरूपेण ज्वलज्ज्वलकराङ्कितम् ॥१६७॥
कार्यारम्भे तथा मध्ये ह्यवसाने तु सर्वदा ।
सन्धत्ते रूपमात्मीयमेकं एव त्वनेकधा ॥१६८॥
श्रेयसे सर्वलोकानां स्थूलं तत्कामरूपधृक् ।
अनुध्यानेन वपुषा कुन्देन्दुधवलेन च ॥१६९॥
वीरासनादिना चैव स्थितं मुदितमानसम् ।
लीलाविधृतमर्त्याभं सौम्यवक्त्रमनाकुलम् ॥१७०॥
धिया दोषगणं सर्वं ग्रसयन्तं च मोक्षिणाम् ।
तद्व्यक्तं शान्तसञ्ज्ञं च रूपं रूपवतां वरः ॥१७१॥
प्रकाशयति सन्मार्गं समाधिनिरतात्मनाम् ।
तेजोमयं यत्तद्रूपं वैभवं शान्तसञ्ज्ञकम् ॥१७२॥
उपासकानां भक्तानां सर्वं सर्वफलप्रदम् ।
विशाखयूपो भगवान् ! स्वयं विश्वसिसृक्षया ॥१७३॥

अध्यक्षेण स्वरूपेण समुदेत्येक एव हि ।
महिमानं तु निश्शेषं शुद्धं संवित्पुरस्सरम् ॥१७४॥
आदायाऽऽश्रपदस्यस्य चातुरात्म्यस्य वै विभोः ।
तथा चाधारभूयिष्ठं देवानां चेष्टितं हि यत् ॥१७५॥
सितादयः कान्तयो याः श्रचादिकं च महामते ! ।
सलाञ्छनं वैभवीयं सायुधं बीजमेव तु ॥१७६॥
ज्ञानाद्यं गुणषट्कं च तदुक्ताः शक्तयोऽखिलाः ।
अणिमाद्यष्टकं चैव स्थित्युत्पत्तिलयोदयाः ॥१७७॥
शक्तिः सा चातुरात्मीया त्वैश्वरीत्यभिधीयते ।
यथार्ककिरणव्रातं त्यक्त्वा तेजःकणो महान् ॥१७८॥
स्वकारणं विना सर्वमापूरयति गोचरम् ।
स्वातन्त्र्यात्परिपूर्णत्वात्तद्वत्स परमेश्वरः ॥१७९॥
विहाय वासुदेवाद्यं मूर्तिशाखाचतुष्टयम् ।
वैभवीयस्य यूथस्य पतित्वेनावतिष्ठते ॥१८०॥
सम्भूतिस्थितिसंहारभोगकैवल्यलक्षणम् ।
प्रेरयन्वै धिया चक्रं पञ्चारमिदमुत्तमम् ॥१८१॥
स्मर्तव्यस्त्वपदस्थः स स्वबीजेनामलात्मना ।
आमूर्धतोंऽघ्रिपर्यन्तं तदीयं गात्रमण्डलम् ॥१८२॥
रत्नवद्वैभवीयैस्तु बीजैर्भाव्यमलंकृतम् ।
क्रमादुच्चार्यमाणैस्तैरमृतौघेन पूर्ववत् ॥१८३॥
पूजनात्परमेशत्वमचिरादेव यच्छति ।
इत्येवमादिः सर्वेषां भाविनां परमेश्वरः ॥१८४॥
स्थितोऽन्तर्यामिभावेन रूपमासाद्य निष्कलम् ।
आप्तकामः स भगवान् स्वव्यापारवशेन तु ॥१८५॥
स्वां शक्तिमवलम्ब्यास्ते पद्मनाभात्मना पुनः ।

धराम्बुहुतभुग्वातमूलनालदलोदरे ॥१८६॥
चतुस्तत्त्वमये पद्मे गगनेकार्णवोदरे ।
मानसेऽनन्तशयने दिव्यबोधतनुर्विभु ॥१८७॥
सहस्रांशुसहस्राभ उत्तानस्थो हि लीलया ।
ततो विविधरत्नाग्रे मायीये नाभिपुष्करे ॥१८८॥
प्रोद्भूतस्तु स्ववीर्येण विया सामर्थ्यविग्रहाम् ।
मूर्तैर्ध्वजादिकैः सर्वैरावृतस्तत्परायणैः ॥१८९॥
अनन्तचेष्टस्य विभोरित्येव त्वीश्वरात्मन ।
भोगापवर्गद रूप शान्त व्यक्त च वैभवम् ॥१९०॥
भाव्यतुर्यपदावस्थ स्मरेद्धृत्कमलाम्बरे ।
दिशो दश द्योतयन्त नानागात्ररुहैश्चितम् ॥१९१॥
सौम्य द्विरष्टवर्षं च राजीवदललोचनम् ।
भवक्रचक्रधृग्देव गदादेह तथैव च ॥१९२॥
शक्तिमाधारसज्ञा च प्रोद्वहन्त स्मरेद्ध्रुवम् ।
स्थितो य स्तम्भभूतस्तु अस्मिन्वै विश्वमन्दिरे ॥१९३॥
नभोऽनिलात्मनाचैव भूमिकामित्रलक्षणे ।
इत्येव मुख्यपूर्वाणा ध्रुवान्ताना प्रकीर्तितम् ॥१९४॥
शेषादीना च शेषाणामिदानीमवधारय ।
ध्यान पातालनिलयपर्यन्ताना यथास्थितम् ॥१९५॥
एक एव जगन्नाथ स्वरूपाद्यैस्तु शक्तिभि ।
नानात्वेनाप्यनन्तो यो भक्तानुग्रहकाम्यया ॥१९६॥
तस्याभिमानिक रूप शृणु सर्वेश्वरस्य तु ।
तुहिनाचलसङ्काश पूर्णचन्द्रसमाननम् ॥१९७॥
स्वमणिव्यञ्जितेनैव युक्त फणगणेन तु ।
प्रोद्वहन्त हल चक्रमपसव्यद्वयेन तु ॥१९८॥

वामहस्तद्वयेनैव शङ्खं मुसलमेव च ।
नित्यसन्निहितं शेषशर्वितं सर्वज्ञमच्युतम् ॥१९९॥
मनस्यन्तर्मुखानां यत्कर्मिणां पूरयेच्च तत् ।
शक्तीशोऽप्यथ सञ्चिन्त्यः पुण्डरीकनिभेक्षणः ॥२००॥
इच्छारूपधरैश्चैव सौम्यः प्रहसिताननः ।
व्यक्तये च फलादीनां भक्तानामनुकम्पया ॥२०१॥
पिण्टयन् स्वांघ्रियुग्मेन वसुधा च करद्वयम् ।
युगानुसारिकान्तिश्च चतुर्वक्त्रश्चतुर्भुजः ॥२०२॥
मूर्तचक्रगदाहस्तस्त्वमूर्तोच्चाम्बुजाङ्कितः ।
शमं नयति सन्तापं कमलेनेन्दुकान्तिना ॥२०३॥
नानामन्त्रमयीं विद्यां व्यञ्जयत्यमलात्मनाम् ।
सम्यग्वाक्पतिना चैव कम्बुना शब्दमूर्तिना ॥२०४॥
आज्ञाप्रतीक्षकेनैव गदाचक्रद्वयेन तु ।
प्रेरितेन हिनस्त्याशु साधुसन्तापकारिणम् ॥२०५॥
नारसिंहेन वक्त्रेण भवभीतिविघातकृत् ।
पुष्णाति सर्वभूतानि वाराहेणाऽमृतात्मना ॥२०६॥
कुरुते पश्चिमस्थेन कापिलेनोपमद्युतिम् ।
भक्तिश्रद्धापराणां च स्मृतमात्रे सदैव हि ॥२०७॥
हृन्मध्ये गगने भूमौ वह्निमध्ये जलान्तरे ।
चतुर्णां ब्राह्मणादीनां स्वयमेवाऽनुकम्पया ॥२०८॥
चातुरात्म्येन रूपेण चतुर्धा व्यक्तिमेति च ।
आत्मतुल्येन देहेन शङ्खपद्माङ्कितेन तु ॥२०९॥
मूर्तिमद्भिर्दलाद्यैस्तु युक्तेन वदनैर्विना ।
वर्णानुरूपवर्णेन समेनाप्यसमेन तु ॥२१०॥
अन्योन्यानुगतेनैव पूर्वोद्दिष्टेन नान्यथा ।

प्रत्यानदसूर्याभः स्मर्तव्यो मधुसूदनः ॥२११॥
अष्टबाहुर्विशालांसोप्यग्निष्टोमकराङ्कितः ।
शंखचक्रधरश्चैव बाणकार्मुकधृक्तथा ॥२१२॥
गजस्तमोभ्यां मूर्ताभ्यां सम्यग्वृत्तिनिवृत्तये ।
फणिपीठनिविष्टं च ध्येयं पाणियुगं विभोः ॥२१३॥
विद्याधिदेवं भगवन् ! चतुर्वक्त्रं चतुर्भुजम् ।
लम्बकूर्चं जटादण्डकमण्डल्वक्षमालिनम् ॥२१४॥
फुल्लरक्ताम्बुजाभासं श्वेतपद्मकराङ्कितम् ।
श्रुतीः अगाधा वक्त्रेभ्यः प्रोद्गिरन्तमतः स्मरेत् ॥२१५॥
निर्धूमाङ्गारवर्णाभं शंखपद्माक्षसूत्रिणम् ।
फुल्लरक्तांशुविभवं देवताध्यात्मसूत्रकम् ॥२१६॥
ध्यायेदभयपाणिन्तं कपिलं तेजसां निधिम् ।
योऽन्तः सर्वेश्वरो देवः साक्षीभूतो व्यवस्थितः ॥२१७॥
स्फटिकोपलवद्भावान् स्वशक्त्याऽर्थान् बिभर्ति च ।
अविद्याविकृतानां तु भक्तानां सत्पदाप्तये ॥२१८॥
तमनादिं जगन्नाथं बहिःस्थूलतरात्मना ।
द्यावापृथिव्योरन्तस्थं विश्वरूपमतः स्मरेत् ॥२१९॥
अनेकवक्त्राभिनयनमनेकितकराङ्कितम् ।
यद्यप्यनेकवदनमनेकभुजभूषितम् ॥२२०॥
तथापि वै त्रयस्त्रिंशद्वदनैर्विविधैर्युतम् ।
चतुरभ्यधिकैर्दिव्यैश्चत्वारिंशन्महाभुजैः ॥२२१॥
ब्रह्मरुद्रेन्द्रदक्षार्कचन्द्रसिद्धास्तथा श्रुतिः ।
पौरुषस्य तु वदनस्य चोर्ध्ववक्त्राश्रितास्त्वमी ॥२२२॥
पिशाचामिमरुच्छेषद्वीपगन्धर्ववारिभिः ।
वसुभिस्तु वेष्टितैर्व्याप्तदक्षिणं वदनं विभोः ॥२२३॥

पाताळदिङ्महामेघलोकराशिगृहोत्थितैः ।
वक्त्रैस्तारसमेतैस्तु ध्यायेद्वक्त्रं तु पश्चिमम् ॥२२४॥
यक्षान्तकाम्बुनागाद्यैर्वसुनक्षत्रगोगणैः ।
वक्त्रैर्वाराहवक्त्रोर्ध्वं ध्यायेच्चैवमतद्दशुभैः ॥२२५॥
पश्चाद्यं चातुरात्मीयमन्त्राणां दशकं महत् ।
प्रोच्छ्रितं हि सुवर्णाद्यं तल्लाञ्छनचतुष्टयम् ॥२२६॥
लोके शास्त्राष्टकं चैव पुस्तकं चाक्षसूत्रकम् ।
दर्वीकमण्डलु हैममभयं हि वरान्वितम् ॥२२७॥
दर्भाजिनं ततश्छत्रं सुशुभं चामरं सितम् ।
सुवस्रुवौ चापि कलशौ वेदिर्वह्निसमन्विता ॥२२८॥
चन्द्रार्कमण्डले पूर्णे नागेन्द्रो मणिदर्पणः ।
पुष्पस्रग्व्यजनं दिव्यं बिल्वपत्रलता तथा ॥२२९॥
स्मर्तव्यास्तु भुजेष्वस्य विभोः संस्थानकैः समैः ।
यथोदितक्रमेणैव व्यत्ययो न भवेद्यथा ॥२३०॥
भाभिर्नानाप्रकाराभिर्देहोत्थाभिरिदं जगत् ।
भासयन्तं जगन्नाथं स्मरेद्धृत्कमलादिषु ॥२३१॥
हंसमूर्तिमथात्मानं ज्ञानयज्ञभुजं स्मरेत् ।
कुन्देन्दुस्निग्धकान्तिं च हेमतुण्डं महातनुम् ॥२३२॥
रजस्तमोंघ्रिं सत्सत्त्वं विग्रहं परमेश्वरम् ।
धर्माधर्मेक्षणे ध्यायेदग्नीषोमात्मकेन तु ॥२३३॥
दक्षिणोत्तरसंस्थेन पक्षयुग्मेन राजितम् ।
बहिःस्थमेवोदकस्थं काञ्चनाचलसन्निभम् ॥२३४॥
ध्यात्वार्चयेत्तु विधिवद्धंसविग्रहमच्युतम् ।
बहिर्द्रव्यमयस्त्वेकः सामान्यैनैकलक्षणम् ॥२३५॥
सम्यङ्निर्वर्तितं स्वर्गं पूर्वमिच्छन्ति चार्थिनाम् ।

अन्तर्वेद्यां चतुर्धा यस्त्वेक एव महामखम् ॥२३६॥
तपोयागजपध्यानस्वरूपं शश्वदेव हि ।
गाजिनामपवर्गं तु विदधाति समापनात् ॥२३७॥
त यज्ञपुरुषं ब्रह्म वासुदेवमजं हरिम् ।
ध्यायेद्धै सूक्ष्मात्मानमञ्जनाद्रिसमप्रभम् ॥२३८॥
यज्ञाङ्गविहिताग्निं च महाव्याहृतिदक्षिणम् ।
भूर्भुवस्स्वश्शरीरं च शब्दब्रह्मक्रमानसम् ॥२३९॥
निर्णुदन्तं प्रपन्नानामविद्यापङ्कमञ्जसा ।
वेचेन पोलप्रान्तेन त्वक्षयेनाऽमलेन च ॥२४०॥
वासनावासितानां च जीवानां भवशान्तये ।
महाविभूतिर्भगवान् पूर्णषाड्गुण्यविग्रहः ॥२४१॥
स्वनाच्छान्ततराद्ब्रह्मतत्त्वादादाय चाऽञ्जलिम् ।
करोति सेचनं दोषदग्धानां च स्वतेजसा ॥२४२॥
स्थूलरूपेण तमजं बहिराराधनाविधौ ।
आध्मातं वायुना वह्निर्धूमाङ्गारपर्वतम् ॥२४३॥
ध्यायेचद्धन्महादीप्तं वाजिवक्त्रमलाञ्छनम् ।
वद्धप्राञ्जलीकस्थं द्रवत्कनकलोचनम् ॥२४४॥
घोणाग्रेणाहरन्तं च त्रैलोक्योत्थं जलेन्धनम् ।
कृत्वा तद्भस्मसात्सम्यक् फूत्कुर्वन्तं मुखेन तु ॥२४५॥
धर्मं सामान्यममलमनादिनिधनं विभुम् ।
दुर्लभं यत्प्रबुद्धानां तत्प्रसादधिया विना ॥२४६॥
तस्य स्थूलतरं रूपं शृणु तत्प्राप्तये परम् ।
तुहिनाचलसङ्काशं सौम्यवक्त्रं चतुर्भुजम् ॥२४७॥
कामार्थावुद्वहन्तं च शङ्खपद्मच्छलेन तु ।
साधुमार्गे स्थितानां तु सम्यच्छन्तं धिया च तौ॥२४८॥

सिलाक्षमालागर्भं तु वरपाणिमतः स्मरेत् ।
वाङ्मयं निखिलं यस्य वस्तुजातमनश्वरम् ॥२४९॥
शक्तित्वेन स्वभावस्थचिद्रूपस्यामितद्युतेः ।
वरवाजिमुखं ध्यायेदथ वागीश्वरं प्रभुम् ॥२५०॥
सूर्यकान्तादिसङ्काशमनेकभुजभूषितम् ।
कमलं चाक्षसूत्रं च वेदिं तेनापि भूषितम् ॥२५१॥
साज्यधारौ स्रुक्स्रुवौ तु विष्टरं सोमसंयुतम् ।
दर्भाजिनं मेखलांश्चाप्यपसव्येषु षट्सु मी ॥२५२॥
स्मरेद्वामकरेष्वस्य पुस्तकं शंखमेव च ।
दण्डं कमण्डलुं दर्वीमेकस्मिंस्त्रितयं करे ॥२५३॥
पूर्णं ग्राम्यैस्तथाऽऽरण्यैश्वरुबीजैस्तु पञ्चमे ।
सद्मूलफलपत्रैस्तु यज्ञद्रव्यैः सदक्षिणैः ॥२५४॥
सर्वाश्रमोपकरणैर्युक्तं च समभाजनम् ।
ध्येयमस्य भुजे षष्ठे धृतं मूर्तं ऋग्गादिभिः ॥२५५॥
वेदाङ्गैरुपवेदैस्तु संस्कारैः समखैस्तथा ।
विकारवसुधाधारे स्वभावे तु गुणोदधौ ॥२५६॥
स्वशक्तिभावितं कृत्वा मन.पूर्वं चतुष्टयम् ।
प्रकृत्यन्तः समास्ते यः सर्वज्ञः पुरुषात्मना ॥२५७॥
निषण्णं भोगिशय्यायां तपनीयरुचिं स्मरेत् ।
देवमर्णवशाय्याख्यं मूर्तैश्चक्रादिकैर्वृतम् ॥२५८॥
लक्ष्म्या संवाह्यमानं च समाक्रान्तं च निद्रया ।
*वीज्यमानं हि वै प्रीत्या गीयमानं हि विद्यया ॥२५९॥*
कूर्मात्मा कूर्मवद्देवो ध्यातव्यस्त्वथ लाङ्गलिन् ।
द्रवत्कनकवर्णाभस्वसामर्थ्यजलाश्रयः ॥२६०॥
शक्त्यादिककलाद्वन्द्वद्वितयांघ्रिः सनातनः ।

अ तर्वेद्या चतुर्धा यस्तेक एव महामखम् ॥२३६॥
तपोयागजपध्यानस्वरूप. शश्वदेव हि ।
याजिनामपवर्गं तु विदधाति समापनात् ॥२३७॥
त यज्ञपुरुष ब्रह्म वासुदेवमज हरिम् ।
ध्यायेद्वै मृत्रात्मानमज्ञनाद्रिसमप्रभम् ॥२३८॥
यजाज्ञचिहिताग्निं च महाव्याहृतिदक्षिणम् ।
भूर्भुवस्स्वश्शरीर च शब्दब्रह्मैकमानसम् ॥२३९॥

निर्णुदन्त प्रपन्नानामविद्यापङ्कमञ्जसा ।
वेदेन पोलप्रान्तेन स्वक्षयेनाऽमलेन च ॥२४०॥
वासनावासिताना च जीवाना भवशान्तये ।
महाविभूतिर्भगवान् पूर्णषाड्गुण्यविग्रह ॥२४१॥
स्वकाच्छान्तनराद्दलत्त्वादादाय चाऽञ्जलिम् ।
करोति सेचन दोषदग्धाना च स्वतेजसा ॥२४२॥
स्थूलरूपेण तमज बहिराराधनाविधौ ।
आध्मात वायुना यद्वाग्निर्धूमाज्ञारपर्वतम् ॥२४३॥
ध्यायेचद्व-महाटीसं वाजिवक्त्रमराञ्छनम् ।

वद्धनत्राञ्जलीकम्थ द्रवत्कनकलोचनम् ॥२४४॥
घोणाग्रेणाहरन्त च त्रैलोक्योत्थ जलेन्धनम् ।
कृत्वा तद्भस्मसात्सम्यक् पूरयुर्वन्त मुखेन तु ॥२४५॥
धर्मं सामान्यममलमनादिनिधन विभुम् ।
दुर्लभ यत्मनुदाना तत्प्रसादधिया विना ॥२४६॥
तस्य स्थूलतर रूप शृणु तत्प्रासये परम् ।
तुहिनाचलसङ्काश सौम्यवक्त्र चतुर्भुजम् ॥२४७॥
फामार्थावुद्वहन्त च शङ्खपद्मच्छलेन तु ।
साधुमार्गे स्थिताना तु सयच्छन्त धिया च तौ॥२४८॥

सिताक्षमालागर्भं तु वरपाणिमत स्मरेत् ।
वाङ्मय निखिल यस्य वस्तुजातमनश्वरम् ॥२४९॥
शक्तित्वेन स्वभावस्थचिद्रूपण्यामितद्युते ।
वरवाजिमुख ध्यायेदथ वागीश्वर प्रभुम् ॥२५०॥
सूर्यका तादिसङ्काशमनेकभुजभूषितम् ।
कमल चाक्षसूत्र च वेदिं लेतामि भूषितम् ॥२५१॥
साज्यधारौ मुक्स्रुवौ तु विष्टर सोमसयुतम् ।
दर्भाजिन मेखलाश्चाप्यपसव्येषु षट्सभी ॥२५२॥
स्मरेद्वामकरेष्वस्य पुस्तक शखमेव च ।
दण्ड कमण्डलु दर्वामेकस्मिंस्त्रितय करे ॥२५३॥
पूर्णं ग्राम्यैस्तथाऽऽरण्यैश्चरुबीजैस्तु पञ्चमे ।
सङ्मूलफलपात्रैस्तु यज्ञद्रव्यैः सदक्षिणै ॥२५४॥
सर्वाश्रमोपकरणैर्युक्त च सममाजनम् ।
ध्येयमस्य भुजे षष्ठे घृत मूर्ते ऋगादिभि ॥२५५॥
वेदाङ्गैरुपवेदैस्तु सस्कारै समखैस्तथा ।
विकारवसुधाधारे ह्यभावे तु गुणोदधौ ॥२५६॥
स्वशक्तिभावित कृत्वा मन पूर्वं चतुष्टयम् ।
प्रकृत्यन्त समास्ते य सर्वज्ञ पुरुषात्मना ॥२५७॥
निषण्ण भोगिशय्याया तपनीयरुचिं स्मरेत् ।
देवमर्णवशाय्याख्य मूर्तेश्चक्रादिकैर्वृतम् ॥२५८॥
लक्ष्म्या सवाह्यमान च समाक्रान्त च निद्रया ।
वीज्यमान हि वै प्रीत्या गीयमान हि विद्यया ॥२५९॥
कूर्मात्मा कूर्मवद्देवो ध्यातव्यस्त्वथ लाङ्गलिन्' ।
द्रवत्कनकवर्णाभस्वसामर्थ्यजलाश्रय ॥२६०॥
शक्त्यादिककलाद्वन्द्वाद्वितयाधि सनातन ।

मात्स्यादिकक्रमाद्वक्ष्ये प्रोद्दिरस्तु श्रुतिलयम् ॥२६१॥
अतसीपुष्पसङ्काश शङ्खचक्रगदाधर ।
मन्त्रोपकरणाङ्गश्च निमग्नोद्धारणक्षम ॥२६२॥
स्वशक्तिविभवाधारमिच्छाज्ञानक्रियार्चितम् ।
नानाविशेषविज्ञानस्फुलिङ्गोर्मिमदोद्धतम् ॥२६३॥
दारयन्त स्थित हार्दमनून मोहमुल्बणम् ।
नदन्नादमनारयेय तमन्त परमेश्वरम् ॥२६४॥
सन्तप्तकनकाभ च ध्यायेद्देव नृकेसरिम् ।
ज्वलदग्निस्फुलिङ्गाभि स्वदेहोत्थाभिरावृतम् ॥२६५॥
रथाङ्गशङ्खधातार ब्रह्ममूर्तमुभीषणम् ।
सत्सरत्वकरजश्रेणीदीप्तेनोभयपाणिना ॥२६६॥
सयच्छन्त धिया सम्यग्भविना साभयम्परम् ।
अमृताध्मातमेवाममभृताहरण विभुम् ॥२६७॥
पीताम्बरधर ध्यायेदेकवक्त्र चतुर्भुजम् ।
श्रोणीतटार्पितकर शङ्खचक्रविभूषितम् ॥२६८॥
गच्यतो दक्षिणेनैव वहन्त गिरिरूपधृक् ।
शुद्धज्ञानानुविद्ध च कर्मसम्भवभीतिदम् ॥२६९॥
दिशन्त स्वधिया सम्यग्भक्ताना भक्तवत्सलम् ।
मायामथितदुग्धाब्धि क्षोभयित्वा प्रकाशितम् ॥२७०॥
अमृत क्षुत्पिपासादीना प्रतिपक्षमनामयम् ।
एव चाध्वर भाव्य मायाम्भ्यार्णवमध्यगम् ॥२७१॥
आत्मामृतमनौपम्यमहरध्वसकर्मणा ।
ध्यायेत्पद्मगर्भाभ देवदेव श्रिय पतिम् ॥२७२॥
पद्मान्यहेमनाविभूषितकरद्वयम् ।
द्रग देवीपरिणये लक्ष्मीमिव समर्पयन् ॥२७३॥

ध्यायेदात्मसरस्ले च देवं राजीवसद्युतिम् ॥२८६॥
विज्ञानरश्मिभिर्दीप्तं सत्त्वखगरुडासनम् ।
नानाकारस्वभूतात्मा सद्विद्यासुमनर्पितम् ॥२८७॥
चक्रं खड्गं गदां बाणमङ्कुशं कुन्तमेव च ।
षट्सु दक्षिणहस्तेषु शक्तिं चापं च कार्मुकम् ॥२८८॥
मुसलं मुद्गरं भीमं खेटकं वामबाहुषु ।
देव आमदलाभश्च राज्यार्थं पारिजातजित् ॥२८९॥
आश्लिष्टकर्मा देवेशः स्वकेकाद्भुतविक्रमः ।
भवबन्धप्रतिरक्षानां भक्तानामपि देहिनाम् ॥२९०॥
यो बोधवृक्षो सरूपो ह्यनित्यश्चानुरञ्जनः ।
न्यग्रोधविटपाकारोऽप्यविद्याबन्धलक्षणः ॥२९१॥
कर्मवृक्षस्तु विततो मोहमायाफलावृतः ।
तदुत्पाटनसिद्ध्यर्थं मनुमास्ते जगत्सदा ॥२९२॥
आविद्याऽऽलोशमानेन हृदया स जगत्प्रभुः ।
स विवेकात्मना भूत्वा ज्ञानबाहुविनाशधृक् ॥२९३॥
ऐश्वर्यधर्मवैराग्यशमस्य स्थितिशक्तिधृक् ।
आदाय संयमास्त्रैव नियमाख्यगणं तथा ॥२९४॥
इन्द्रियारिगणं जित्वा कार्गणा दोषदो हि च ।
यतस्य सुरजिद्रूपं तन्मद्वादशभुजं स्मरेत् ॥२९५॥
दिव्यमाल्याम्बरधरं दिव्याभरणभूषितम् ।
चतुर्वक्त्रं सुनयनं वागोत्तमाभिप्रियम् ॥२९६॥
खड्गं चक्रगदाबाणं मुसलं च सरूपकम् ।
षट्सु दक्षिणहस्तेषु शङ्खमङ्कुशकार्मुकम् ॥२९७॥
छत्रं च पाशमुद्गरा विनेर्दाम भुजेष्वपी ।
पद्मासनस्थितं देवं नागवितेन दण्डा ॥२९८॥

तद्वत्सलमनस्या देव्या तच्चिन्तयाऽनिशम् ।
सवीज्यमानं विनयाच्चामरेण सितेन तम् ॥२९९॥
लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम् ।
वरसिंहासनारूढं ध्यानोन्मीलितलोचनम् ॥३००॥
पद्मासनेनोपविष्टं पद्मगर्भोपमद्युतिम् ।
करुणाविष्टबुद्धिं च बद्धपद्मकराहितम् ॥३०१॥
ज्ञानवैराग्यसद्धर्ममार्गत्रयनिदर्शकम् ।
संस्मरेदथ दत्ताख्यं ज्ञानमूर्तिमलेपकम् ॥३०२॥
सनन्दमुनिदेवानां समाधिनिरतात्मनाम् ।
उपलब्धरसानां च ब्रह्ममार्गानुसारिणाम् ॥३०३॥
स्वप्रभानिकरेणैव भ्रामयन्तं च सत्पथम् ।
मनसा सह वायूनां मार्गातिप्रतिषेधकृत् ॥३०४॥
श्रुतीनामागमानां च व्यापाराणां तथैव च ।
वर्णानामाश्रमाणां चाऽप्याचाराणां तथैव च ३०५
वर्णानामाश्रमाणां च परिरक्षक एव हि ।
ज्ञानैकार्णवान्तस्थे निष्कम्पे बुद्धिरूपे ॥३०६॥
अभिधानलताख्ये त्वप्युपरिस्थमनुस्मरेत् ।
प्रावृड्गिरिमिव श्यामं तेजसा ज्वलनोपमम् ॥३०७॥
व्योमकुक्षिविशालस्य शिराऽऽकम्पचयस्य च ।
उत्कृष्टद्विजरूपेण विकसत्पद्मरूपिणा ॥३०८॥
स एव द्विभुजो ध्येयो दण्डकाशिसूत्रधृक् ।
तत्त्वज्योत्स्नाजिताज्ञानं स्वभोपशयनं विभुम् ॥३०९॥
निषण्णमीषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एवमेव निरस्तान्तं शान्तानिद्राम्भसिस्थितम् ॥३१०॥

विष्टराविष्टपाणिञ्च क्रियाकाण्डप्रदर्शकम् ।
पठन्तमनिशं शास्त्रं पञ्चरात्रपुरस्सरम् ॥३३६॥
कृष्णमिन्दीवरश्याममूर्ध्वबाहुं जटाधरम् ।
पादेनैकेन तिष्ठन्तमाहरन्तञ्च मारुतम् ॥३३७॥
एकत्रिषड्द्विषडाद्यातिकृच्छ्रपरायणम् ।
पक्षमासोपवासाश्च दिशन्तमनुचिन्तयेत् ॥३३८॥
कृष्णाजिनोत्तरीयाश्च सर्वे काषायधारिणः ।
ब्रह्मलिङ्गधरास्सर्वे सर्वे ब्रह्मपरायणाः ॥३३९॥
मुख्यकर्मपरिक्रान्तास्साधूनां प्रेरणाय च ।
कालानुकूलमाश्रित्य सर्वे सर्वे परायणाः ॥३४०॥
असङ्गशक्त्या भगवान् सकुठाराभिधानया ।
छिनत्ति बन्धमूलान् यः कर्मवृक्षांस्तु कर्मिणाम् ॥३४१॥
तमेनं द्विभुजं ध्यायेत् उदयादित्यवर्चसम् ।
कृष्णेणचर्मवसनं सत्कुठारकराङ्कितम् ॥३४२॥
दशेन्द्रियाननं घोरं यो मनोरजनीचरम् ।
विवेकदाजलैन शमं नयति योगिनाम् ॥३४३॥
ध्येयस्स एव विश्वात्मा गतोयजलदप्रभः ।
रक्तराजीवनयनः धनुश्शरकराङ्कितः ॥३४४॥
यागेदं मण्डलं यो वै स्वरूपद्युतिलक्षणम् ।
स्वयं स्वोऽयं विसृजति त्रिधा पश्यन्ति पूर्वकम् ॥३४५॥
बोधमारनद्धरूपैरयानैश्चाभ्युदितं क्रमात् ।
स्मर्तव्यस्सोऽपि भगवानतसीकुसुमद्युतिः ॥३४६॥
वहन्वै वामहस्तेन सर्वशास्त्रार्थपुस्तकम् ।
दक्षिणेन तु शास्त्रार्थमादिशश्च यथास्थितम् ॥३४७॥

युगानुसारिभेदानामखेदजननाय च ।
विभजत्तु चतुर्धा वै वेदमेकं त्रिकालवित् ॥३४८॥
दानधर्मरतानाञ्च यागयज्ञानुयाजिनाम् ।
तपस्स्वाध्यायसक्तानां मुक्तानामपुनर्भवात् ॥३४९॥
संरक्षणाय योग्यस्वविज्ञानव्यक्तयेपि च ।
समुदेति जगन्नाथस्तेषां हृत्कमलावनेः ॥३५०॥
मनोवाजिनमाक्रम्य स्वादायात्तगुणायुधान् ।
नूनमुच्चाटयत्याशु जन्मान्तरशतोत्थितम् ॥३५१॥
वैषय वासनाजालं शुद्धविज्ञानसिद्धये ।
ध्यायेद्भृगाधिपं तं वै तनुत्राद्दृतविग्रहम् ॥३५२॥
सितोष्णीषललाटञ्च नातिदीर्घजटाधरम् ।
द्रवत्कनकवर्णाभामिषुधिद्वयमध्यगम् ॥३५३॥
शरचापकरञ्चाग्रखड्गं कुन्तकुठारिणम् ।
यज्ञाध्ययनदानादि परिरक्षन्तमेव हि ॥३५४॥
शान्तयन्तमवर्णानामधर्मनिरतात्मनाम् ।
सर्वतत्वाश्रयं तत्वं सर्वशक्तिमयं विभुम् ॥३५५॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
निश्शेषभुवनानाथ ध्यातव्यं तदधः स्थितम् ॥३५६॥
अनन्तशयनारूढं कल्पान्तहुतभुक्प्रभम् ।
ज्वलज्ज्वालावळीयुक्तं ज्वलनाशुविनेष्टितम् ॥३५७॥
चक्राद्यायुध *वृन्देन मूर्तेन परिवारितम् ।
सितापिदेशतोलक्ष्मीःस्थिता दक्षिणतो विभो. ॥३५८॥
मूर्धदेशगता निद्रा पृष्ठस्तद्वामतस्स्थिता ।
प्रधानदेवताध्यानमिदमुक्तं समासतः ॥३५९॥

---

* पा॥ सन्तेन

सुपर्णः पद्मरागाभः निर्मल स्स्वर्णलोचन ।
गरुडः काञ्चनाभस्तु कुटिलभ्ररुणेक्षण ॥३७२॥
केकराक्षस्तु तार्क्ष्यो वै प्रावृड्जलदसन्निभः ।
द्रवत्कनकनेत्रस्तु शबलाभस्तु पञ्चम ॥३७३॥
चतुर्भुजा स्सुपर्णाद्या स्सौम्यरूपा स्त्वनाकुला ।
पतत्त्रिचरणा स्सर्वे पक्षमण्डलमण्डिता. ॥३७४॥
लम्बोदरा स्सुपीनाङ्गाः कुण्डलाद्यैस्तु भूषिता ।
कुटिलभ्रुसुवृत्ताक्षा वक्रतुण्डा स्मिताननाः ॥३७५॥
अपानादिसमीराणामाधिपत्येन संस्थिताः ।
महाबला महाकाया रक्ततुण्डोऽत्र पञ्चमः ॥३७६॥
आधेयचरणाधस्थसव्य आद्यस्य वै करः ।
दक्षिण श्चाक्षसूत्रेण सुसितेन च भासितः ॥३७७॥
एवमेव सुवर्णस्य परिज्ञेयं भुजद्वयम् ।
नाभ्युद्देशे परो वाम उत्तानस्तु सविस्मयः ॥३७८॥
पुष्पस्तरकसम्पूर्ण ऊर्ध्ववक्त्रस्तु दक्षिणः ।
गरुडस्य द्वयं विद्धि हृद्देशेऽञ्जलिरूपिणम् ॥३७९॥
तत्रैव सम्पुटाकार चतुर्थस्य करद्वयम् ।
दक्षिणेऽमृतकुम्भस्तु वामे तु विषमं फणी ॥३८०॥
पञ्चमस्य द्वयं शेषं त्रयाणां च द्वयोस्समम् ।
आधेयचरणाक्रान्तो यदि वै दक्षिणः करः ॥३८१॥
सव्यारो विहितो वामे त्वक्षसूत्रस्य वै तदा ।
आधेयचरणाधस्थं यस्य पाणिवलद्वयम् ॥३८२॥
निरस्तशूल त विद्धि वाहनं भगवन्मयम् ।
अनुग्रहपरस्त्वास्ते पक्षिपक्षाब्जविष्टरे ॥३८३॥
स्वतेजो निजसामर्थ्यमन्तुरगनगान्विते ।

पद्मासनादिना चैव केवल वा क्रियाऽन्वित ॥२८४॥
सुव्यक्तावयवस्थित्या विद्धि तं गरुडासनम् ।
मेढ्रमुस्कोदरस्यैव गोपिताद्वेगगामिना ॥२८५॥
वीर्यपातास्स्वशिरसा गच्छतश्चाण्डजेन तु ।
लोकान्तराणां कार्यार्थं वात्सल्याद्ध्यायिनामपि ॥२८६॥
प्रत्यक्षदर्शनार्थं तु स्मृतो गरुडवाहन. ।
तस्माद्भगवतो विष्णोरेव रूपधरस्य तु ॥२८७॥
समाहृतस्य सिद्ध्यर्थमासीन संस्मरेत् स्थितम् ।
उपसंहृतवामाङ्घ्रि पङ्कस्थो वा नगस्थित. ॥२८८॥
वाममिच्छाफलाना फल् ध्वसयत्यन्यचिन्तितम् ।
आजानोर्दक्षिणस्यैवमविक्षिप्ते स्मृतोऽच्युत ॥२८९॥
आमोक्षात्सर्वसिद्धीना दक्षिणोध्यायिनां भवेत् ।
सदैव ऋजुस्थित्या सुस्थितश्चार्थिनां स्मृतम् ॥२९०॥
स्वस्तिकार्धेमनस्यैव किं तु तं वाहन विना ।
निहितापीठकल्हारसिंहासनगतस्य च ॥२९१॥
विहगाधिपतिश्चात्र योगैश्वर्याङ्घ्रिगर्ति च ।
सयन्न भुजगेन्द्र तु नागेन्द्रासनवरान्वितम् ॥२९२॥
विभोराद्ये दशेनैव तुष्ट्यर्थं वा स्वयं विभो ।
जगज्जयोदयार्थं तु शान्त्यै शरणैषिणाम् ॥२९३॥
विभिन्नेन च रूपेण नानालोकान्तरेषु च ।
अनिरुद्धगतिर्वीरो विचरत्येक एव हि ॥२९४॥
तदारूढस्य यद्रूपं प्रकाशस्य च साम्प्रतम् ।
अनेकभेदभिन्नं तु निबोध गदतो मम ॥२९५॥
संपद्यन्ते सदा यान्ति नविना दाक्षिण्येन तु ।
मोदन्ते च पाणौ यदि पूर्वोक्तलक्षणम् ॥२९६॥

द्विभुजस्य विद्धि रूपं शक्तीशस्य तु केवलम्।
रूपेणानेन च पुनर्ध्योढा समुपयाति च ॥३९७॥
सह कान्तागणैरेवं त्वेकाधेन पृथक् पृथक्।
प्राग्वल्लक्ष्म्या समेतं यत्तदेकं रूपमेश्वरम् ॥३९८॥
श्रीपुष्ट्योरथ मध्यस्थं द्वितीयं परिकीर्तितम्।
श्रियादिमायानिष्ठेन चतुष्केणावृतं परम् ॥३९९॥
शुद्ध्यादिकेन षट्केण चतुर्थं विद्धि साम्प्रतम्।
पुष्ट्यन्तेन श्रियाद्येन त्वष्टकेन तु पञ्चमम् ॥४००॥
लक्ष्म्याद्येन द्विषट्केण षष्ठं विद्धि समन्वितम्।
श्रियादिर्विमला कान्तिर्जया लक्ष्मी इलासुधा ॥४०१॥
चतुर्थी भगवन्माया विश्वव्यापिनि नन्दिनी।
शुद्धिर्निरञ्जना नित्या ज्ञानशक्त्यपराजिते ॥४०२॥
प्रकृतिः सुन्दरी षट्कमित्युक्तं सर्वसिद्धिदम्।
लक्ष्मीशब्दनिधिः सर्वकामदा प्रीतिवर्धिनी ॥४०३॥
यशस्करी शान्तिदा च तुष्टिदा पुष्टिदायकम्।
द्विषट्कं वैभवे योगे देवीनां कीर्तितं हि यत् ॥४०४॥
लक्ष्म्याद्यन्तं च बोद्धव्यं भेदऽस्मिन्पारमेश्वरे।
पुनश्चतुर्भुजस्यैव विज्ञेयं भेदसप्तकम् ॥४०५॥
किं तु ये शङ्खचक्रे द्वे वामहस्तद्वये तु।
जगत्यस्मिन् हि यच्छन्तं शान्तिभावेन शाश्वतीम् ॥४०६॥
प्रोद्वहन्तं द्वितीयेन त्वपसव्येन वै गदाम्।
भूय [illegible] पूर्वोक्तेन क्रमेण तु ॥४०७॥
चतुर्णामप्यनुदारणामन्योन्यत्वेन धारणात्।
यत्ते द्वादशधा रूपं निद्र्यक्तोऽपि च केवलम् ॥४०८॥
पुनर्होमनुग [illegible] द्विषट्केन तु।

स्थितमेकाधिकेनैव षोढा कमललोचन ॥४०९॥
एवं चतुर्भुजेनैव वपुषा बहुधा स्थितम् ।
सप्तधा षड्भुजाद्येन भुजाधिक्येन वा पुनः ॥४१०॥
स्थितस्त्वनेकधा देवो यथा तदवधारय ।
षड्बाहुरष्टबाहुश्च दश द्वादशबाहुधृक् ॥४११॥
द्विसप्तषोडशकरस्तथाष्टादशभूषित ।
केवलादिश्च सर्वेषां प्राग्वद्भेदस्तु सप्तधा ॥४१२॥
तन्मे शृणु यथावस्थमस्त्रविन्यासचिह्नितम् ।
षड्भुजो दक्षिणैर्धत्ते निस्त्रिंशं कमलं गदाम् ॥४१३॥
सशरं कार्मुकं शङ्खं वामैरब्जोत्तम त्रिभिः ।
गदामुसलचक्रासीनष्टबाहुस्तु दक्षिणैः ॥४१४॥
शङ्खमङ्कुशपाशश्च वामैस्तु सशरं धनुः ।
खड्गबाणगदापद्मशक्तियुक्तास्तु दक्षिणाः ॥४१५॥
दश बाहोर्धनुःशङ्खचक्रखेटाश्च वामया ।
मण्णा दक्षिणहस्तानां हिरक्कुसुमभूषितः ॥४१६॥
सन्धत्ते कमलं खड्गचक्रबाणगदाङ्कुशान् ।
शङ्खपाशाभयं शक्तिं सव्यानां मुसलं धनुः ॥४१७॥
चतुर्दशभुजो धत्ते वामे तु भुजसप्तके ।
शङ्खं गदाङ्कुशं पाशं मुसलं मुद्गरं हलम् ॥४१८॥
दण्डाब्जकुलिशं चक्रं खड्गशक्तिपरश्वधान् ।
बिभृयात्षोडशभुजो मुख्यस्त्वस्त्रमुद्गरान् ॥४१९॥
अभयं कमलं खड्गं शक्तिदण्डशराङ्कुशान् ।
शङ्खचक्रगदापद्म शूलाब्जकार्मुकान् ॥४२०॥
धरः कराष्टकेनैव धत्ते सव्येन विश्वजित् ।
पद्मगदागदापद्मशङ्खाब्जगदाङ्कुशान् ॥४२१॥

दण्डदक्षिणहस्तैस्तु धत्तेऽष्टादशबाहुधृक् ।
शङ्खामयं हलं शक्तिं मुद्गरं मुसलं धनुः ॥४२२॥
कुठारमतुलं पाशं बिभ्रद्वामभुजैरमून् ।
बिभर्ति दुष्टशान्त्यर्थं साधूनां पालनाय च ॥४२३॥
भूयो विशेषरूपाणि एतान्येव विशेषतः ।
सद्वक्त्रद्वयमात्रेण नयत्यमितविक्रमम् ॥४२४॥
संहृतेजोसहिष्णूनां पितृयानरतात्मनाम् ।
अञ्जनादिकसंचारभीतानां वै हिताय च ॥४२५॥
अमृते वै गृहे भागे तेजसे नित्यदक्षिणे ।
वामदक्षिणवक्त्राभ्यां कुर्याद्वै व्यत्ययं प्रभुः ॥४२६॥
युद्धयेऽपि च शान्त्यर्थं तेजसः पद्मलोचनः ।
हेतुना तेन भगवान् बहिरन्तर्गतेन वै ॥४२७॥
अग्नीषोमौ समीकृत्य त्वास्ते साधारणात्मना ।
व्यक्तिं वागीशवक्त्रं तु नीत्वैव शिरसोपरि ॥४२८॥
पञ्चवक्त्रेण वपुषा त्वामूलाधात्मनेकधा ।
शब्दब्रह्मरतानां च ध्यायिनामात्मसिद्धये ॥४२९॥
आपातालाच्च सर्वेषां लोकानां पूरणाय च ।
नानावपुर्धरो भूयस्त्वेकैकेनैव याति च ॥४३०॥
भेदेन रूपमाश्रित्य दशया च सितादिकम् ।
विना वक्त्रैर्नृसिंहाद्यैस्सर्वत्रमाहिमान्वितम् ॥४३१॥
बिभर्ति रूपाण्येतानि अनिरुद्धस्तु तार्क्ष्यकः ।
एवमाकम्य गरुडं प्रद्युम्नो बिभृयाद्वपुः ॥४३२॥
नानात्वनपिचाम्येति मङ्कर्षणस्तु पन्नगः ।
देवस्सत्यो गरुः स्थित्वा विधात्मा यन्त्यनेकधा ॥४३३॥
सुरगिरिरनुष्म्यादिभूतानां तु समागते ।

चतुर्णां ये निजा वर्णास्ते तु मूर्त्यन्तरेषु च ॥४३४॥
चतुर्भुजस्यादिमूर्तेर्विष्णोर्मूर्त्यन्तरस्य च ।
वरलाञ्छनतुल्यत्वे भेदकृत्सव्यजद्वयम् ॥४३५॥
अपसव्यस्थितेनैव तत्तालाख्यध्वजेन तु ।
स्वरूपभेदमाप्नोति स्वमूर्त्या सह सर्वदा ॥४३६॥
यस्मात्कार्यवशेनैव मूर्तीनामपि पाणिगा ।
न तु पद्मादयश्शान्तामूर्तामूर्तास्तथोद्यता ॥४३७॥
इत्येव भगवद्ध्यान सर्वमूर्ते मुनीश्वराः ।
दिव्यायुधानाकेषा चिद्ध्यानमुक्त पुरैव तु ॥४३८॥
शेषाणामायुधाना तु ध्यान वक्ष्येऽधुना द्विजाः ।
सन्ध्याजलदसङ्काश लाङ्गल भीमलोचनम् ॥४३९॥
क्षमाङ्कमुद्वताम्र च वज्रकाय बलोत्कटम् ।
स्वरश्मिखचित ध्यायेन्नृत्यमान च नन्दकम् ॥४४०॥
शरदाकाशसङ्काश दर्शन्त दशनावलिम् ।
सूर्यमण्डलसङ्काश खेटक सौम्यमूर्तिकम् ॥४४१॥
ग्रसन्तमसपूगानि स्ववक्त्रेणानिश बलात् ।
बलमुष्टि स्मरेद्दण्ड रक्ताङ्ग रक्तलोचनम् ॥४४२॥
क्रोधमूर्ति स्वदशनैर्दशन्तमधर स्वरम् ।
शक्रकार्मुकवर्णं च परशु भीमविग्रहम् ॥४४३॥
द्रवत्कनकनेत्र च ज्वलज्ज्वालाजटाधरम् ।
मुद्गर शतधामाभ पीनास पृथुविग्रहम् ॥४४४॥
जटाकलापधृक्सौम्य पुण्डरीकनिभेक्षणम् ।
पद्म यज्ञोपवीताभ तु स्थित दीर्घनखाङ्कितम् ॥४४५॥
दंष्ट्राकरालवदन ज्वलत्कनकलोचनम् ।
शीतांशुनिभया शक्ति शान्तामिवत्नेक्षणाम ॥४४६॥

घनघर्घरनिर्घोषमुद्गिरन्त मुहुर्मुहु ।
अन्यत्सर्वं तु पूर्वोक्त ध्यानमेषा मुनीश्वरा. ॥४४७॥
अधिष्ठातृक्रमस्त्वेषामोषध्यो लाङ्गल द्विजा ।
नन्दक सर्वशास्त्राणि खेटक वसुधा स्मृता ॥४४८॥
ज्ञेयो हि दण्डो नियतिर्वैराग्य परशुस्स्मृत ।
मुद्गरस्तु परिज्ञेयो ह्यहङ्कारो मुनीश्वरा ॥४४९॥
विज्ञानमण्डल वज्र समाधिश्शक्तिरुच्यते ।
भिन्नरूपस्य च विभोर्य उक्तस्सुन्दरीगण ॥४५०॥
साधारश्चाप्यसाधारस्तासा ध्यान क्रमाच्छृणु ।
चिन्ताखण्डलचापाभा लक्ष्मी रक्ताम्बुजप्रभा ॥४५१॥
पुष्टि कनकगौरा च कीर्ति कुमुदपाण्डरा ।
जयार्ककान्तिसदृशी मायाञ्जननिभा स्मृता ॥४५२॥
शुद्धि किंशुकसङ्काशा कुन्दाभा तु निरञ्जना ।
बन्धुजीवोज्ज्वला नित्या ज्ञानशक्तिस्सितारुणा ॥४५३॥
फुल्लेन्दीवरवर्णा च परिज्ञेया पराजिता ।
रक्तोत्पलाभा प्रकृति स्सितपीता सरस्वती ॥४५४॥
सर्वकामप्रदा सिद्धिरिन्द्रनीलसमप्रभा ।
सिन्दूरपुञ्जवर्णाभा विज्ञेया प्रीतिवर्धिनी ॥४५५॥
यशस्करी च दुग्धाभा शान्तिदा विद्रुमोज्ज्वला ।
तुष्टिस्तुहिनसङ्काशा दया वैडूर्यसन्निभा ॥४५६॥
निद्रायस्कान्तसदृशी क्षमा पीतारुणप्रभा ।
कान्तिर्दर्पणसङ्काशा धृतिर्गोरोचनोज्ज्वला ॥४५७॥
मैत्री बन्धूकपुष्पाभा रतिर्गैरिकसन्निभा ।
मतिर्मरतकाभा वै सर्वा *प्रमुदिता गुणा· ॥४५८॥
दिव्यमाल्याम्बरधरा नानालङ्कारभूषिता ।

*पा ॥ प्रमुदितानना ।

दिव्यस्रग्वेष्टनोपेता वीक्षमाणास्स्वकं पतिम् ॥४५९॥
चतस्रश्शक्तयो यास्तु विभोश्शयनगस्य तु ।
प्रागुक्तास्तत्र पूर्वाशावस्थिता वीजयन्त्यजम् ॥४६०॥
अयं यद्दि(?)त्रयस्थं तु तत्संवाहनतत्परम् ।
यत्रैका श्रीर्विभोस्तत्र सन्निवेश पुरोदितः ॥४६१॥
यत्रैका श्रीर्विभोस्तत्र वामे वा दक्षिणेपि वा ।
श्रीपुष्ट्याख्यद्वयं यत्र तत्र तद्दक्षिणोत्तरे ॥४६२॥
पद्मासनेनोपविष्टं पक्षिपक्षद्वयेन ते ।
नळिनीनाळहस्ताद्याऽमृतकुम्भकरा परा ॥४६३॥
अग्नीषोममयो देह आद्यो यस्सर्वगस्य च ।
तस्य शक्तिद्वयं तादृगमिश्रं मिन्नलक्षणम् ॥४६४॥
भोक्तृशक्तिस्स्मृता लक्ष्मी पुष्टिर्वै कर्तृसंज्ञिता ।
भोगार्थमवतीर्णस्य तस्य लोकानुकम्पया ॥४६५॥
उदितं सह तेनैव शक्तिद्वितयमव्ययम् ।
नानात्वेन हि वै यस्य परिणामः प्रकाशित ॥४६६॥
दिक्पत्रचतुरन्तस्थं यद्वै देवीचतुष्टयम् ।
शक्तिः परशुपाशास्त्रमङ्कुशं तत्करे क्रमात् ॥४६७॥
षट्कं केसरजालस्थं तत्र प्राक्पश्चिमे द्वयम् ।
द्वयंद्वयं सौम्ययाम्ये तासां वामकरेषु च ॥४६८॥
शङ्खचक्रगदासीरमिष्वस्त्रं नन्दकं सितम् ।
पत्रमध्यनिविष्टं तु यत्कान्ताष्टकमुत्तमम् ॥४६९॥
तस्य वामकराणां च विज्ञेयं त्वादितोऽष्टकम् ।
श्रीफलं चाक्षसूत्रं सदर्पणं पुष्पमञ्जरीम् ॥४७०॥
विष्टरं किङ्किणीं शस्सचयः कमलेक्षण ।
विशेषरन्ध्रच्छिदः पाणिर्द्वादशानां तु सामगः ॥४७१॥

अन्तरान्तरयोगेन सर्वाश्यामरलाञ्छिता ।
स्वस्तिकेनोपविष्टाश्चाप्यन्तर्मुदितमानसा ॥४७२॥
छत्रादिकस्यान्य सवस्य द्वादशान्तस्थ_लाञ्छलिन् ।
सितादिकेन वर्णेन लाञ्छनव्यत्ययेन तु ॥४७३॥
तुल्यलाञ्छनयोगेन तन्निरासे च वै सति ।
वराभयाभ्यामन्योन्यपाणित्वादथ केवलात् ॥४७४॥
बहुधा भेदवृन्द तु परिज्ञेय तु पूर्ववत् ।
शेष भवोपकरणदेवाना निचयो हि य ॥४७५॥
सुप्रसिद्धो महाबुद्धे किं त्वब्जादेस्तु पूर्ववत् ।
ध्यातव्या लाञ्छनास्सर्वे पाणिपादतलादिषु ॥४७६॥
भक्तिश्रद्धावतपर स्सर्वदा यस्सदैव हि ।
ध्यात्वैव मर्चन कुर्याद्भोगैस्सास्पर्शपूर्वके ॥४७७॥
सोऽचिरान्मोक्षनिष्ठ तु फलमाप्नोत्यभीप्सितम् ।
किरीटाद्यस्त्रनिष्ठेन परिवारेण चावृतम् ॥४७८॥
भक्त्या ह्यभीप्सित रूपमर्चनीयमथापि वा ।
निर्मुक्तपरिवार वा स्वेन ध्यानेन लक्षितम् ॥४७९॥
विदधात्यर्चना नून स्व पद फलसयुतम् ।
ज्ञात्वैव साधक कुर्याद्यथाभिमतमर्चनम् ॥४८०॥
आत्मशक्तिसमैर्भोगैरखिलैश्शुद्धविग्रह ।
हृदि वेद्या बहिर्मूर्तौ प्रासादे स्वगृहे तु वा ॥४८१॥
बहुप्रकारनिर्मुक्ते धूमदाहादिनोज्झिते ।
शरणे रमणीये च निम्सन्धर्व तु भाविते ॥४८२॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
मुद्रालक्षणभगवद्ध्यानादिप्रकारो नाम
चतुर्विंशोऽध्यायः ॥

—○—

## अथ पञ्चविंशोऽध्यायः ॥

नारदः ।

अतः परं प्रवक्ष्यामि कुण्डादीनां च लक्षणम् ।
शृणुध्वमवधानेन चेतसा मुनिपुङ्गवाः ॥१॥
( पुरमण्डलसिद्ध्यर्थं यथाक्षेत्रं विभाजितम् ।
तथैव भाजितात् क्षेत्राच्चतुरश्रान्महात्मने ॥
पूर्वोद्दिष्टानि धिष्ण्यानि यथाकार्याणि तच्छृणु ॥ )
पञ्चन ब्रह्मकर्माद्यं मर्मप्राग्दिग्व्यवस्थितम् ।
अंशदैर्घ्येण तस्यैव कुर्यात्सूत्रेण लाञ्छनम् ॥२॥
अर्धचन्द्रसमाकारं भागयुग्मस्य चान्तरे ।
दक्षिणोत्तरभागाभ्यां तदधस्तत्समं तथा ॥३॥
लाञ्छनद्वितयं कुर्यात्तिर्यक्तत्स्थानसंस्थितम् ।
भागद्वादशकस्यैक्यं स्यात्तद्वृत्तिद्वितयाद्यथा ॥४॥
ब्रह्मकर्मचतुर्थं यत्तद्व्यासमानं च पूर्ववत् ।
मर्म तस्य च दक्षस्थाविक मर्मान्तरस्थितौ ॥५॥
ताभ्यामवस्थितेनैव सूत्रेणतत्समायने ।
पुनर्मध्यात्तिनीय यत्कर्म चोर्ध्वे प्रवर्तते ॥६॥
तस्माद्धि ब्रह्मन्तर्गतेन चतुर्थं पदांशाद्धये ।
मर्म तत्स्थेन सूत्रेण वृत्तार्धं *पूर्ववल्लिखेत् ॥७॥
ब्रह्मकर्माणि पञ्चस्य प्रत्यग्दिक्स्थितस्य च ।
मर्मप्राग्यद वै सूत्रं कृत्वा तत्समभागं च ॥८॥
यावद्वृत्तार्धयुग्मं शङ्खकोटेस्तु सलिखेत् ।
एव गृध्रयेद् दक्षे धिष्ण्यद्वन्द्वाकृतिर्भवेत् ॥९॥

---

* द्ववशिरोन ॥

तस्य भागसमा कार्या लाञ्छनैर्मेखला बहिः ।
पूर्वोक्तमार्गैस्सूत्रैर्यथावदवधारय ॥१०॥
द्व्यंशदीर्घेण सूत्रेण नवचन्द्रकलासमम् ।
चतुर्णामन्तरंशानां प्राग्दिक्कुर्याच्च लाञ्छनम् ॥११॥
ईशवह्निपदाभ्यां तु वृत्ततुर्यांशसम्मिते ।
द्वे लाञ्छने समे कुर्याद्दिग्भागादिके ततः ॥१२॥
तत्समे अपरे द्वे वै यत्तदा लाञ्छयलाञ्छने ।
दक्षिणोत्तरभागाभ्यां पश्चात्सूत्रद्वयं क्षिपेत् ॥१३॥
कृत्वा सम्यक्कर्मर्मस्थं पूर्वोद्दिष्टक्रमेण तु ।
जीवसूत्रस्य पाश्चात्ये भागे पार्श्वद्वये स्थितम् ॥१४॥
भागद्वयं द्वयं लाञ्छ्यं योऽन्यथं चार्धवृत्तवत् ।
तच्छृङ्गकोटिके सूत्रे कृत्वा ते सम्प्रसार्य च ॥१५॥
खातभूभागपर्यन्तं तत्पादाद्रुटपत्रवत् ।
जायते सर्वकुण्डानां योनिरेवंविधा शुभा ॥१६॥
भागार्धमानमूलेण योनेरभ्यन्तरे पुनः ।
अर्धवृत्तद्वयं दद्यात्तद्वत्सूत्रद्वयान्वितम् ॥१७॥
खातस्यान्तर्गतो वर्ज्यश्चतुर्थांशस्तु कोष्ठकात् ।
ओष्ठार्थं निम्ननेच्छेषं तत्समं वा पुरोदितम् ॥१८॥
दैर्घ्यात्पादादिका कार्या योनिर्वै पृष्ठतोन्नता ।
गजोष्ठसदृशी चाग्रात् स्पृशन्ति दशनच्छदम् ॥१९॥
पुरोभागश्चतुर्थांशं योनेरग्राद्विसृज्य तु ।
दद्यात्प्राक्सूत्रसम्बन्धं सूत्राणां द्वितयं परम् ॥२०॥
अनुपातेन वै ताभ्याममात्सङ्कोचमाचरेत् ।
भागषड्‌त्रित्रयेणैव मेखलात्रितयं बहिः ॥२१॥
सम्पाद्य चतुरश्रं तु शङ्ख तत्त्रितयोपरि ।

## अथ पञ्चविंशोऽध्यायः ॥

नारद ।

अतः परं प्रवक्ष्यामि कुण्डादीनां च लक्षणम् ।
श‍ृणुध्वमवधानेन चेतसा मुनिपुङ्गवाः ॥१॥
( पुरामण्डलसिद्ध्यर्थं यथाक्षेत्रं विभाजितम् ।
तथैव भाजितात् क्षेत्राच्चतुरश्रान्महामते ॥
पूर्वोद्दिष्टानि धिष्ण्यानि यथाकार्याणि तच्छृणु ॥ )
पञ्चमं ब्रह्मकर्माद्य मर्मप्राग्दिश्यवस्थितम् ।
अंशार्धार्धेण तत्स्थेन कुर्यात्सूत्रेण लाञ्छनम् ॥२॥
अर्धचन्द्रसमाकारं भागयुग्मस्य चान्तरे ।
दक्षिणोत्तरभागाभ्यां तदधस्तत्समं तथा ॥३॥
लाञ्छनद्वितयं कुर्यात्तिर्यक्तत्स्थानसंस्थितम् ।
भागद्वादशकस्यैक्यं स्यात्तद्वृत्तिद्वितयाद्यथा ॥४॥
ब्रह्मकर्मचतुर्थं यत्सद्व्यामान च पूर्वतः ।
मर्म तस्य च पश्चस्थावेक मर्मान्तर्गतौ ॥५॥
ताभ्यामवस्थितेनैव सूत्रेणतत्प्रजायते ।
पुनर्मध्यादिनीम यत्कर्म चोर्ध्वं प्रवर्तते ॥६॥
तस्माद्धि प्रयन्तर्गमूत चतुर्थं पक्षकोष्ठये ।
गर्म तत्स्थेन सूत्रेण वृत्तार्धं *पूर्ववद्विजेत ॥७॥
ब्रह्मकर्माणि पञ्चस्य प्रत्यग्दिक्संस्थितस्य च ।
मर्मणोप्यथ वै सूत्र कृत्वा तत्स्थमगार्य च ॥८॥
यावद्वृत्तार्धकुमस्य शृङ्गकोटिस्तु संस्थितः ।
एवं पृथक्तेय दृष्टं भिल्पदनद्धावृत्तिर्भवेत ॥९॥

* प्रवर्तितेन ॥

तस्य भागसमा कार्या लाञ्छनैर्मेखला बहिः ।
पूर्वोक्तमर्मगैस्सूत्रैर्यथावदवधारय ॥१०॥
द्व्यंशदीर्घेण सूत्रेण नवचन्द्रकलासमम् ।
चतुर्णामन्तरंशानां प्राग्दिक्कुर्याच्च लाञ्छनम् ॥११॥
ईशवह्निपदाभ्यां तु वृत्ताद्युर्यांशसंस्थिते ।
द्वे लाञ्छने समे कुर्यादेकभागाधिके सत ॥१२॥
तत्समे ह्यपरे द्वे वै यत्र स्याल्लाञ्छनलाञ्छने ।
दक्षिणोत्तरभागाभ्यां पश्चात्सूत्रद्वयं क्षिपेत् ॥१३॥
कृत्वा सप्तकमर्मस्थं पूर्वोद्दिष्टक्रमेण तु ।
जीवसूत्रस्य पाश्चात्ये भागे पार्श्वद्वये स्थितम् ॥१४॥
भागद्वयं द्वयं लाञ्छ्य योऽन्यर्थं चार्धवृत्तवत् ।
तच्छृङ्गकोटिके सूत्रे कृत्वा ते सम्प्रसार्य च ॥१५॥
खातभूभागपर्यन्तं तत्पादाङ्कटपल्लवत् ।
जायते सर्वकुण्डानां योनिरेवंविधा शुभा ॥१६॥
भागार्धमानसूत्रेण योनेरभ्यन्तरे पुनः ।
अर्धवृत्तद्वयं दद्यादङ्गुलद्वयान्वितम् ॥१७॥
खातस्यान्तर्गतो वर्ज्यश्चतुर्थांशस्तु कोष्ठकात् ।
ओष्ठार्थं निम्नयेच्छेषं तत्समं वा पुरोदितम् ॥१८॥
दैर्घ्यात्पादाधिका कार्या योनिर्वै पृष्ठतोन्नता ।
गजोष्ठसदृशी चाग्रात् स्पृशन्ति दशनच्छदम् ॥१९॥
पुरोभागचतुर्थांशं योनेरग्रात्विसृज्य तु ।
दद्यात्प्राक्सूत्रसम्बन्धं सूत्राणां द्वितयं परम् ॥२०॥
अनुपातेन वै ताभ्यामग्रात्सङ्कोचमाचरेत् ।
भागषट्तित्रयेणैव मेखलात्रितयं बहिः ॥२१॥
सम्पाद्य चतुरश्रं तु शङ्कुं तदिन्नगेऽपि ।

आशङ्काऽमेखलाना तु प्रोक्तत्र सविस्तृते ॥२२॥
मेखलाना तु शङ्कस्य खन्मध्येऽश्रचतुष्टयम् ।
तचनचिह्नित कुर्यात्लक्षणमथोच्यते ॥२३॥
प्रहारर्मीनिरद्धेन चतुर्भागसमेन तु ।
ग्रासार्थं प्राग्भ्रम दद्यात् क्षेत्रम ये महामते ॥२४॥
षड्भिर्भागसमानाग्निमद्धहिर्वृद्धांशाविस्तृतम् ।
अग्रक्षेत्र च तस्यापि नमिर्भागसमा नहि ॥२५॥
भागेन तद्बहिस्त्वरा चतुरश्रा च मेखला ।
आस्यमध्यादरक्षेत्र वृत्तेनैकेन वै पुन ॥२६॥
तत्र सूत्राष्टक दद्याद्दिग्विदिक्संस्थित पुरा ।
तस्य चान्तर्गत पश्चादष्टक पातयेत्परम् ॥२७॥
ततस्तेषा समापाद्यमरत्नमसलेक्षण ।
अन्तर्वृत्त निरुद्धेन प्रतिसूत्रस्य पक्षयो ॥२८॥
सूत्रेण लाञ्छन कुर्यान्नाभिनेमिभ्रमावधे ।
एकाशार्धमान च नेमिवृत्तस्य चान्तरे ॥२९॥
द्वाभ्या द्वाभ्यामराभ्या तु मध्ये कुर्यात्प्रधिर्नधिम् ।
विस्तारप्रोन्नता नाभि कूर्मपृष्ठोपमाकर ॥३०॥
नेमिर्दर्पणवत्कार्या स्वीपत्निम्नावसान ।
शिष्ट पुरोदित सर्वमथ पद्माकृति शृणु ॥३१॥
भागार्धं भ्रामयेन्नाभेर्बहि क्षेत्रमिदं द्वयं ।
भ्रामयेदपर चार्धमरक्षेत्रस्य साधन ॥३२॥
नीत्वा गोपमनेनैव विधिना नेमिमण्डलम् ।
अग्रसूत्रभ्रम कुर्याद्दल पद्मदलाष्टकम् ॥३३॥
क्षेत्रक्रमरद्धेन सूत्रेणार्धेन्दुलक्षणम् ।
तत्पार्श्वाग्रिमध्येन पश्चिमयोस्तु ॥३४॥

सूत्रद्वयेन पत्राग्रं कुर्याद्वाह्यभ्रमावने ।
निरन्तराणामामूलात्केसराणां महामते ॥३५॥
कर्णिकोच्छ्रायतुल्यानां विभागं जनयेत् स्फुटम् ।
शङ्कुकोणचतुष्के तु शेषं पूर्ववदाचरेत् ॥३६॥
योनिरेकेन भागेन चतुर्भिर्मेखलागणम् ।
खातं पूर्वसमं किं तु वृत्ते वृत्तास्तु मेखला ॥३७॥
चतुरश्रे तदाकारा इत्युक्तं कुण्डपञ्चकम् ।
चाल्पाहुतिसङ्ख्या च होमद्रव्यप्रमूलताम् ॥३८॥
ज्ञात्वैवमेकहस्ताच्च कुर्यादष्टकरावधि ।
ततस्स्रुक्स्रुवयोरत्र लक्षणं प्रोच्यते द्विजाः ॥३९॥
स्वबाहुदण्डमानेन मन्त्रज्ञः कल्पयेत्पुरा ।
दैर्घ्यात्स्रुवस्य दण्डे काष्ठविस्तारात्व षडङ्गुलम् ॥ ४० ॥
दैर्घ्याद्भागद्वयेनाथ दण्डमष्टाश्रमुच्यते ।
सार्धद्व्यङ्गुलमानं तु कृत्वा शेषं तु शोधयेत् ॥ ४१ ॥
अमलं दण्डमूले तु कुर्यात्सद्यानन शुभम् ।
कर्णिकास्थो यथा दण्डो भवेद्वै मुनिसत्तम ॥४२॥
त्रिवलिं त्वथ वा शङ्खं यथादण्डस्तदाग्रग ।
कृत्वाग्रस्थं द्विधा भागं समाशेन प्रयत्नतः ॥४३॥
द्व्यङ्गुलं चाथ भागस्य नैपुण्यं चाग्रतः क्रमात् ।
दण्डावस्थस्य भागस्य द्व्यङ्गुलं परितस्समम् ॥४४॥
दत्वा भ्रमं ततः कुर्यान्निम्नं खातं सुलक्षणम् ।
तन्मध्ये पङ्कजं कुर्यात्स्फुटं चोर्ध्वपत्रकम् ॥४५॥
आज्यकोशं तु तं विद्धि सप्तपञ्चदलोपमम् ।
पद्मं यं निम्नगा च कर्णिका वै सकेसरा ॥४६॥
द्वादशारं बहिश्चरं पत्रन्याष्टरूपं च ।

पद्माद्ये तु कर्तव्यं शङ्कुकोणचतुष्टये ॥४७॥
ततोऽग्रभागमस्य मुने पार्श्वयोरुभयोरपि ।
एकैकमङ्गुलं शोध्यं संविभज्य त्रिधा ततः ॥४८॥
कर्णमेकेन भागेन मध्ये त्वाम्यो द्वयेन तु ।
विच्छिन्नं चक्रमसाभ्यां मध्यमेकाङ्गुलेन तु ॥४९॥
विस्तारं कर्णतुल्यं तु वर्जयित्वा ततः पुरा ।
कर्णद्वारसमारभ्य शेषं तु परिशोधयेत् ॥५०॥
क्रमागतेन सूत्रेण स्याद्वाराहाननं यथा ।
ततः पुष्करपर्णान्तु मुखाग्रं यावदेव हि ॥५१॥
कुर्यादाज्यप्रणालं तु समन्यूनाङ्गुलं मुने ।
ईषद्वै क्रमसूक्ष्मं च नाज्यं याति यथाहुतम् ॥५२॥
हस्तमात्रं ततः कुर्यात्स्रुवं विप्र मनोरमम् ।
विस्तारं द्व्यङ्गुलं काष्ठं वैपुल्याच्च तदर्धतः ॥५३॥
विस्तारमानादग्रे स्याद्वृत्तं कुर्यात् द्विरङ्गुलम् ।
क्रमाच्च निम्नतातं च गोलकेनैव सुन्दरम् ॥५४॥
मध्ये मृगपदाकारचिह्नेन तु विराजितम् ।
विस्तारस्य त्रिभागेन ग्रीवा सामा त्रिरङ्गुला ॥५५॥
मूले चोभयतः कुर्यात्स्वस्तिकं द्व्यङ्गुलायतम् ।
विचित्ररचनायुक्तदण्डं श्लक्ष्णं तु वा भवेत् ॥५६॥
स्रुवमेवविधं कुर्याद्धोमकर्मणि साधकः ।
ततस्तु प्राक्षणादीनां साधनं शृणुत द्विजाः ॥५७॥
शालिमुद्गयवा माषा गोधूमाश्च प्रियङ्गवः ।
तिलास्सप्त त्विमे प्राह्या ग्राम्या वै चरुकर्मणि ॥५८॥
वेणुश्यामाकनीवारा जर्तिलाश्च गवीधुकाः ।
[illegible] कनकाम्साः [illegible] ॥५९॥

शालयस्तेषु मुख्यास्स्युस्तदन्यास्तदभावत ।
रक्तशाल्यो महाशाल्य कलमा गन्धशालय ॥६०॥
श्वेतशाल्यस्सशूकाश्च हेमाभा गर्भशालय ।
सुकुमाराश्च सूक्ष्माश्च दशैते शालय स्मृता ॥६१॥
अन्तर्भेदाश्च बहवस्सन्ति मुद्रा उदाहृता ।
मुद्रा कृष्णाश्च हैमाश्च श्वेता पीता महत्तरा ॥६२॥
अञ्जनाभाश्च सप्तैते अन्तर्भेदा उदाहृता ।
श्वेता कृष्णाश्च पीताश्च वन्याश्चैव महातिला ॥६३॥
तिलाना पञ्च भेदास्तु माह्यास्तु परिकीर्तिता ।
उपाहृतानि केदाराद्देवीयाच्च कृषीवलै ॥६४॥
शालिमुद्गादिभेदानि कर्मण्यान्यर्चने हरे ।
अवपातादिभिर्दोषैरेष्ठाभिर्वर्जितानि च ॥६५॥
आनयेदवघातार्थमवघातगृहे पुरा ।
गोमयेन समालिप्ते सुधाद्यै परिमण्डिते ॥६६॥
शोधिते शतधारेण पवित्रेण कुशाम्बुभि ।
स्थले प्रवणमुद्धार्य प्राङ्मुखो वाप्युदङ्मुख ॥६७॥
दीक्षितैर्नियतैर्विप्रैर्धृतचक्रादिलक्षणै ।
सुस्नातैर्लोहदार्वश्ममृन्मयानि समन्तत ॥६८॥
स्थापयित्वोलूखलानि क्षालिते खादिरैर्दृढै ।
मुसलैरवहन्याम्ने द्वादशाक्षरविद्यया ॥६९॥
निस्तुषान्निष्कणान् कृत्वा तण्डुलान् शूर्पकोटरै ।
तैस्तावदवहन्तव्या यावन्मुक्ताफलप्रभा ॥७०॥
अखण्डिताश्चानणव कृष्णबिन्दुविवर्जिता ।
मुद्गभेदास्तथा कार्यास्सारवन्तश्च निस्तुषा ॥७१॥
सार्धाभिन्नाश्चूर्णाभिर्वा दीक्षितानामभावत ।
शूद्रैर्वा दीक्षितैर्देवदासीभिर्दिव्यसद्मनि ॥७२॥

इवे पाकादिकर्मार्थं कार्यावहननक्रिया ।
वैष्णवानां गृहे शुद्धे दीक्षितानां गृहेऽपि वा ॥७३॥
तण्डुलांस्तु प्रगृह्णीयाद्विधिक्षुण्णांस्तु देशिक ।
अकणानतुषानेव क्रिमिहीनानपि क्रमात् ॥७४॥
केशपाषाणहीनांस्तु प्राण्यङ्गरहितास्तथा ।
भस्माङ्गारविहीनांस्तु अभग्नानलघूनपि ॥७५॥
कणैस्तु भवति व्याधिस्तुषैर्दारिद्र्यकं भवेत् ।
क्रिमिभिः पुत्रनाशः स्यात्केशैर्दारविनाशनम् ॥७६॥
पाषाणैर्मरणं विद्धि अशान्त्या वह्निना जलैः ।
प्राण्यङ्गैर्व्याधयः प्रोक्ता भस्मना कलहो ध्रुवः ॥७७॥
अङ्गारैर्वह्निना बाधो भग्नैर्भङ्गस्तु विग्रहे ।
प्रवासो लघुभिश्चैव तस्मात्तान्परिवर्जयेत् ॥७८॥
सम्भारानखिलानेव प्राक्सङ्कल्पितसम्मतान् ।
सम्भृत्य देशिकस्सार्धं साधकैः पाचकैरपि ॥७९॥
अवघातगृहं प्राप्य तत्रस्थं तण्डुलादिकम् ।
" ब्रह्मशुक्र मिवे" त्युक्त्वा नेत्रैणैवावलोकयेत् ॥८०॥
प्राग्वत्सशोधयेत्तानि दहनाप्यायनादिभिः ।
*वैदलादिष्वशुद्धेषु पात्रेषु वितनेष्वपि ॥८१॥
पचनार्थं समुद्धृत्य तत्सर्वं तण्डुलादिकम् ।
तत्तत्पात्रसमुद्धारे निपुणे परिचारकैः ॥ ८२ ॥
शुक्लैश्च शुचिभिश्च वस्त्रेणाच्छादिताऽऽननैः ।
आनयेत्पचनागारं शङ्खतूर्यादिमङ्गलैः ॥ ८३ ॥
द्वारस्योत्तरपार्श्वे तु गोमयेनोपलेपिते ।
प्रदेशे निक्षिपेत्तानि भाजनानि यथाक्रमम् ॥ ८४ ॥

---

* वैदलादिषु शुद्धेषु ॥

गुलोपदशपूर्वाणि लवणादिरसानि च।
विन्यसेत् द्वारदिग्भागे दधिक्षीरघृतानि च ॥८५॥
निदध्यात्रैर्ऋतने भागे होमोपकरणान्यपि।
चतुर्भिर्व्यापकैर्मन्त्रैर्वस्त्रपूतेन वारिणा ॥८६॥
क्षाळयित्वा चतुर्थी वै यथा स्यात्तण्डुलादिषु।
शिलाशकलनिर्मुक्तं निस्तुषं निष्कणं यथा ॥८७॥
अपक्वैर्व्रीहिविहितैस्तण्डुलेनैव साधितम्।
मध्वद्राक्षाज्यसंसिक्तं गुडखण्डफलान्वितम् ॥८८॥
अक्षारलवणोपेतं देवाना हविरुच्यते।
तदेव परमान्नं स्यात् क्षीराज्यगुळपाचितम् ॥८९॥
घृतसिक्तं तु सिद्धान्नमभावे हविरुच्यते।
अक्षारलवणं सिद्धं गुळक्षीरफलान्वितम् ॥९०॥
शान्तये व्रतयज्ञे च संसाध्य हविरुत्तमम्।
पायसान्नं गुडान्नं च मुद्गान्नं केवलोदनम् ॥९१॥
दध्यन्नं च तिळान्नं च निशान्नं सर्वमिश्रितम्।
इत्यष्टधा समुद्दिष्टं हविर्देवस्य सम्मतम् ॥९२॥
प्रारभेत हविः पाकं वक्ष्यमाणेन वर्त्मना।
आहृत्योदनपाकाग्निं कुण्डादौपासनानलात् ॥९३॥
चुल्ल्यां निधाय तारेण "सप्तते॑ऽग्ने" इतीरयन्।
इन्धनानि विनिक्षिप्य यज्ञदारुमयानि च ॥९४॥
निर्मिरीद्यादिहीनानि "ज्योतिरात्री॑ति" मन्त्रतः।
प्रज्वाल्य व्यजनेनैव ततः स्थाल्यां च ताम्रजाः ॥९५॥
प्रक्षाळ्य त्रिनिर्णीतोयैः केवलैर्मृन्मयास्ततः।
प्रक्षाळ्य द्वादशार्णेन वीर्यमन्त्रेण मन्त्रवित् ॥९६॥
घृतेन लापयेत्तासामन्तः व्यूहविद्यया।
तण्डुलान्प्रक्षिपेत्तासु गायत्र्या विष्णुपूर्वया ॥९७॥

' अग्नेस्त्वपार " इति च मन्त्रेण सहृदा पुन ।
जलेन पूरयेदूर्ध्वे तण्डुलान्प्रतिपात्रकान् ॥९८॥
तण्डुलाधिकमानस्य षट्प्रस्थमुदकं भवेत् ।
कर्मारम्भेण तास्स्थालीश्चुल्ल्यामारोपयेत्तत ॥९९॥
चक्रमन्त्रेणापिधानैस्तास्समाच्छाद्य यथाक्रमम् ।
पाककाले समुद्धाम्य वीर्यमन्त्रेण तद् ज्वनिम् ॥१००॥
निरीक्ष्य नेत्रमन्त्रेण दर्व्यामूलं समुद्धरन् ।
चतुर्धावर्तयेच्चैव चक्रेणाच्छादयेत्पुनः ॥१०१॥
पक्वे जत्रमपि साज्य द्वादशार्णं समुच्चरन् ।
विद्राविते न गव्येन हविषा चाभिघार्य च ॥१०२॥
शुचौं सत्कृतयतेत्यादिमन्त्रेणाधारपूर्वत ।
शोधिते भूतले नाथ व्रीहिभिर्वा प्रसारिते ॥१०३॥
एव दर्वीपि सिद्धानि पाणिभ्यामवरोप्य च ।
अस्त्राभिमन्त्रितेनैव वहिः प्रक्षाल्य वारिणा ॥१०४॥
तन्मन्त्रितेन शुद्धेन वस्त्रेणावर्तयेत्तत ।
भस्मना मथितेनाग्निर्वासुदेवादिवार्चके ॥१०५॥
तर्जन्याद्यङ्गुलीभिश्च कुर्याद्दिक्षूर्ध्वपुण्ड्रकम् ।
समाच्छाद्य निजानैश्च वसनै क्षालितैस्तत ॥१०६॥
इत्युक्तं साधनं सम्यक् शुद्धान्नस्य विशेषत ।
अन्येषां साधनं वक्ष्ये परमान्नपुरस्सरम् ॥१०७॥
तण्डुलस्य तु तुर्येन पायसे मुद्गसारकम् ।
तन्मानं घृतमुद्दिष्टं तच्चतुर्गुणितं पय ॥१०८॥
नाळिकेरोद्भवं चापि तत्समं कथितं पय ।
चतुर्गुणं तण्डुलाच्च खण्डचूर्णसमन्वितम् ।१०९॥
मार्यण्डुक्रमर्गेण समन्त्रं कथलेन्दने ।
रसदग्धपिष्टादिन्यस्त गोक्षीरस्य निषेचनम् ॥११०॥

" अम्भस्यपार " इति च मन्त्रेण सहृदा पुनः ।
जलेन पूरयेदूर्ध्वं तण्डुलान्प्रतिपात्रकान् ॥९८॥
तण्डुलाधिकमानस्य षट्प्रस्थमुदकं भवेत् ।
कर्मारम्भेण तास्स्थालाश्चुल्ल्यामारोपयेत्ततः ॥९९॥
चक्रमन्त्रेणापिधानैस्तास्समाच्छाद्य यथाक्रमम् ।
पाककाले समुद्धार्य वीर्यमन्त्रेण तद्ध्वनिम् ॥१००॥
निरीक्ष्य नेत्रमन्त्रेण दर्व्यामूलं समुद्धरन् ।
चतुर्धावर्तयेच्चैव चक्रेणाच्छादयेत्पुनः ॥१०१॥
पक्वे जगमरि साध्य द्वादशार्णं समुच्चरन् ।
विष्टावितेन गव्येन हविषा चाभिघार्य च ॥१०२॥
शुचौ संस्कृतयतेत्यादिमन्त्रेणाधारपृष्ठत ।
शोधिते भूतले नाथ व्रीहिभिर्वा प्रसार्य तु ॥१०३॥
एवं हवींषि सिद्धानि पाणिभ्यामवरोप्य च ।
अस्त्राभिमन्त्रितेनैव बहिः प्रक्षाल्य वारिणा ॥१०४॥
तन्मन्त्रितेन शुद्धेन वस्त्रेणावर्तयेत्तत ।
भस्मना मथितेनाथिर्वासुदेवादिवाचकैः ॥१०५॥
तर्जन्यायङ्गुलीभिश्च कुर्याद्विश्वपुण्ड्रकम् ।
समाच्छाद्य पिधानैश्च वसनैः क्षालितैस्ततः ॥१०६॥
इत्युक्तं साधनं सम्यक् शुद्धान्नस्य विशेषतः ।
अन्येषां साधनं वक्ष्ये परमान्नपुरस्सरम् ॥१०७॥
तण्डुलस्य तु तुर्यांशं पायसे मुद्गसारकम् ।
तन्मानं घृतमुद्दिष्टं तच्चतुर्गुणितं पयः ॥१०८॥
नाळिकेरोद्भवं चापि तत्समं कथितं पयः ।
चतुर्गुणं तण्डुलाच्च खण्डचूर्णसमन्वितम् ॥१०९॥
सायंप्रदुक्तमार्गेण समन्त्रं कमले दने ।
इमदगुन्निंदित्यत्र गोक्षीरस्य निषेचनम् ॥११०॥

तदभावे नियोक्तव्यं नाळिकेरोद्भवं पयः।
अब्जागोजेति तत्क्षेपः स्याद्द्रव्यप्रतियोजने ॥१११॥
गुळान्नपाचने क्षीरमपहायैक्षवं रसम् ।
कथितं गुळखण्डं वा क्षीरमानानुसारतः ॥११२॥
क्षीरभक्षेऽमन्त्रेण गुळादीनि नियोजयेत् ।
मुद्गान्ने तण्डुलं सम्यङ्मुद्गसारं नियोजयेत् ॥११३॥
शुद्धान्ने तु पुरा प्रोक्त विशेषेण घृताप्लुतम् ।
दध्योदनं दधिक्षेपं क्षीरार्धपरिसम्मितम् ॥११४॥
कदळीपनसाम्रादिगुळखण्डसमन्वितम् ।
खण्डचूर्णसमोपेतं कृसरान्ने तु मुद्गकम् ॥११५॥
आर्द्रकस्य हरिद्रान्ने निशापिष्टं फलं भवेत् ।
मुद्गसारसमोपेतं शुद्धखण्डादिसंयुतं ॥११६॥
मिश्रान्ने योजयेत्किञ्चित् क्षीराज्यघृतसंप्लुतम् ।
शान्त्यर्थे पयसा मिश्रं पुष्ट्यर्थे गुळमिश्रितम् ॥११७॥
वश्यार्थे मुद्गसारोऽथमाकृष्टौ दधिमिश्रितम् ।
कृसरान्नं तु प्रीत्यर्थे मारणोच्चाटनेऽपि च ॥११८॥
स्तम्भने च हरिद्रान्नं मिश्रान्नं मोहने भवेत् ।
साधारणं तु शुद्धान्नं यात्रासु मृगयादिके ॥११९॥
विशेषेण तु दध्यन्नं हेमराजतपात्रगम् ।
मरीचिशुण्ठिलिकुचतिन्त्रिणीरसमिश्रितम् ॥१२०॥
जीर्णेन नारिकेरस्थेन संस्कुर्याद्द्रव्यवस्तुभिः ।
रसभेदसमुत्थानि पनसाद्रितयोद्भवम् ॥१२१॥
चूतदेशसमुत्थानि नातिपक्वानि कान्ततः ।
बृहत्युर्वारुतातिकूष्माण्डप्रभवानि च ॥१२२॥
कारवल्लीलतोत्थानि कार्कोटप्रभवानि च ।
पटोलद्वितयोत्थानि कोशातकयुक्तानि च ॥१२३॥

अलाबुकर्करीनिम्बभदोत्थ तिन्त्रिणीफलम् ।
क्षुद्रकन्दसमेतं च वल्लीकन्दद्वयं तथा ॥१२४॥
सूरणद्वयकन्दं च तथा पिण्डारकद्वयम्
पद्मोत्पलसमुत्थं च हविर्योग्यं विशेषतः ॥१२५॥
उच्छिष्टं निर्मितं च शिवाद्युद्देशितं तथा ।
घृतं लालानलस्पृष्टममेध्यस्थलसम्भवम् ॥१२६॥
पादस्पृष्टमरालोत्थमाहृतं चाशुचिस्थले
भुक्तशेषं तथाऽस्पृश्य स्पृष्टं दत्तान्यदोषकम् ॥१२७॥
परीक्ष्य बहुधा मन्त्री वर्जयेत्पाककर्मणि ।
जीवन्तीं वास्तुकं शाकं कारवल्लीदलं तथा ॥१२८॥
तुम्बीदलं च पिण्डीं च चुच्चुमुद्गदलानि च ।
शाकिनीं शतपर्णीं च तथैव श्वासमर्दितम् ॥१२९॥
आगम्य पाचयेच्छाकं विहितं ब्राह्मणस्य च ।
शाकमूलानि चान्यानि गृह्णीयादनिषेधने ॥१३०॥
छेदयित्वा लवित्रेण वीर्यमन्त्रं समुच्चरन् ।
निरीक्ष्य क्रिमिकीटादीन् प्रक्षाल्य बहुधा जलैः ॥१३१॥
पावन् स्थालीषु निक्षिप्य प्रत्येकं वाऽथ मिश्रितम् ।
सैन्धवैस्समरीचैश्च सर्षपैर्जीरकैरपि ॥१३२॥
क्षीरर्णिदलमिश्रैश्च पयोभिर्नारिकेलजैः ।
तक्रैरपि सद्घृतैर्मधुभिर्घृतमिश्रितैः ॥१३३॥
मसूरमाषनिष्पादिमुद्गमदसमन्वितम् ।
सयूषान्मुद्गभेदादीन्यूपान्लवणादाम ॥१३४॥
रसभेदैस्समवाथ साधयेदनन्तरम् ।
त्वचो व्यपाद्य मुद्गादैस्सारं क्षीरेण पाचितं ॥१३५॥
मरीचजीरकाद्यैर्घृतयुक्तैश्च मर्दितं ।
दध्यादिमिश्रं सम्पूर्य द्रगुल्लान सरस यथा ॥१३६॥

स्थालीशरावपूर्णेषु पाचितानि पुरैव तु ।
कदलीपनसादीनि नाळिकेरफलानि च ॥१३७॥
कूश्माण्डबृहतीपूगकारवल्लीफलानि च ।
क्षुद्रकन्दसमेतानि वल्लीपिण्डारकानि च ॥१३८॥
अम्बरीषादिपात्रेषु विततेषु समन्ततः ।
घृतलिप्तेषु तप्तेषु समारोप्य यथार्थं च ॥१३९॥
चूर्णीभूतैर्मरीचैश्च जीरकेण घृतेन च ।
प्रतापितानि स्निग्धानि दर्व्याऽऽलोड्य पुनः पुनः ॥१४०॥
स्थापनीयानि भाण्डेषु छादितान्यम्बरादिभिः ।
आम्रादीनि च शुष्काणि अशुष्काणि फलानि च ॥१४१॥
तिन्त्रिणीगुळमिश्राणि मरीचैर्जीरकैरपि ।
नाळिकेरोत्थपयसा सर्षपैः पेषितैरपि ॥१४२॥
स्थापयेद्दाम्ससारोत्थ लवणेन समन्वितम् ।
शृङ्गिबेर च लिकुच दाळिम हरित च वा ॥१४३॥
वासित लवणोपेत लिकुचोत्थरसेन तु ।
कदळीपनसाम्राणां केवलानि फलानि च ॥१४४॥
गोधूमशालिनैः पिष्टैर्गुळपाकेन लोळितैः ।
पाचितैर्मुद्गसारैश्च शर्कैर्नारिकेळजैः ॥१४५॥
जीरकैस्समरीचैश्च घृतेऽपूपानि पाचयेत् ।
सुवृत्तान्याम्रतुल्यानि धात्रीफलसमानि च ॥१४६॥
न्यग्रोधफलतुल्यानि लिकुचाद्याकृतीनि च ।
अन्तर्निक्षिप्तमुद्गानि रसवन्ति समन्ततः ॥१४७॥
गुळपिष्टेन बद्धानि नाळिकेराहृतानि च ।
नानाभेदसमुत्थानि घृतेऽपूपानि साधयेत् ॥१४८॥
शालिव्रीहिसमुत्थाश्च स्थालीषु स्फुटितानि च ।
पृथुनि वर्तितानि गुळपाकान्वितानि च ॥१४९॥

चूर्णैतैश्च मरीचैश्च जीरकै खण्डितैरपि ।
नाळिकेरफलैश्शुष्कैः पृथुकानि च साधयेत् ॥१५०॥
भर्जितैश्शालिपिष्टैश्च मिश्रितैर्जीरकादिना ।
लोलितैर्गुळपाकेन पिण्डीभूतैः पृथक्पृथक् ॥१५१॥
सक्तु स्यात्साधित तद्वत्तिलै पिण्ड सुभर्जितै. ।
तिलपिण्डइति ख्यातस्सदा देवस्य सम्मत ॥१५२॥
सुशृत च घनीभूत खण्डचूर्णसमन्वितम् ।
क्षीर च मधुसर्पिभ्या सद्रूत सुघन दधि ॥१५३॥
तरुणैश्चक्कलीभूतैर्वार्किसहकारयो. ।
रूक्षसर्षपसम्मिश्र समरीच तथा दधि ॥१५४॥
पृथक्पात्रगतं शुद्धं गाळित माक्षिकं मधु ।
द्राक्षापनसरम्भाम्रसमुत्थैर्मर्दितैरसै. ॥१५५॥
लोळित गुळखण्डेन जीरिकादिसमन्वितम् ।
रसालमेतद्विज्ञेय दधिमिश्र तु पानकम् ॥१५६॥
केवलं दधिसम्मिश्र वारिणा तत्समेन तु ।
मथित समरीच च लवणैश्चाधिवासितम् ॥१५७॥
खण्डचूर्णसमोपेत पानक श्रमशान्तिकृत् ।
अन्नानामपि सम्कारे पुरा मन्त्रा प्रकीर्तिता ॥१५८॥
तदन्येषा तु सम्कारो द्वादशार्णेन वा हृदा ।
साङ्गेन मूलमन्त्रेण सर्वं ससाधयीत वा ॥१५९॥
विष्णुगायत्रिया वाथ पद्योपनिषदाऽथ वा ।
समाप्य परमन्नाद्यमुपदशान्वित क्रमात् ॥१६०॥
फलनादिषु सम्थाप्य चोर्ध्वपुण्ड्रादिलङ्कृतम् ।
महानसद्वारभूमेर्गन्यद्वारपश्चिमम् ॥१६१॥
गोमयेनानुलिप्तेन सुधाचूर्णेन शोभिना ।
पञ्चवर्णरजश्चित्रितभागपुरस्सरम् ॥१६२॥

शङ्खतूर्यादिघोषेण तथा मङ्गळगीतिभिः ।
प्रदीपच्छत्रयुक्तैश्च हवि.पात्रतत्परैः ॥१६३॥
वेत्रपाणिभिरन्यैश्च नास्तिकोत्सारणोद्यतैः ।
स्नाताश्शुक्लाम्बरा दक्षाः कृतपादा वने जनाः ॥१६४॥
स्वाचान्ताः कुशहस्ताश्च मृदा वा चन्दनादिना ।
धृतोर्ध्वपुण्ड्रा नियता मनोवाक्कायकर्मभिः ॥१६५॥
सितकञ्चुकधर्तारस्स्थगिताननासिकाः ।
बलमन्त्रेण भाण्डानि वहेयुः परिचारकाः ॥१६६॥
मूलालयप्रदेशस्थे मण्टपे विततेऽथ वा ।
प्रथमावरणे धाम्नो दक्षिणे मालिकावनौ ॥१६७॥
सुगुप्ते सुवितानाढ्ये दीपमालाद्यलङ्कृते ।
प्रदेशे वस्त्रसञ्छन्ने स्थाप्यानि फलकादिके ॥१६८॥
हवि.प्रमाणतुल्याश्च हेमराजतताम्रजाः ।
स्थालिकाश्च यथालिप्ताः प्रक्षाल्यास्त्रेण वारिणा ॥१६९॥
पाणिना दक्षिणेनैव परामृश्याथ तेन च ।
तारेण तासु निक्षिप्याधाराज्यस्य समन्ततः ॥१७०॥
स्थालीभ्यस्समुपाहृत्य दर्व्या हेमादिकल्पया ।
तदूर्ध्वे निक्षिपेन्मौळी पायसादीन्यनुक्रमात् ॥१७१॥
घृतेनाप्लाव्य मधुरव्यञ्जनानि समन्ततः ।
दधिक्षीरादिपूर्णानि चषकाण्यूर्ध्वतो न्यसेत् ॥१७२॥
सिद्धान्यपूपभेदानि पृथुकादीनि यान्यपि ।
पानकानि विचित्राणि पृथक्पात्रगतानि च ॥१७३॥
कर्पूरचन्दनक्षोदप्रसूनैश्चाधिवासितम् ।
शीतळं वस्त्रसञ्छन्नं पानीयं करकादिषु ॥१७४॥
एलालवङ्गतक्कोलजातीपूगफलान्वितम् ।

कर्पूरतैलसम्मिश्रं खण्डितं च क्षुरादिभिः ॥१७५॥
नागवल्लीदलोपेतं सचूर्णं चेन्द्रसंयुतम् ।
ताम्बूलं च प्रतिष्ठाप्य पात्रेष्वब्जाकृतीषु च ॥१७६॥
चन्दनादीनि गन्धानि तथा नानाविधास्रजः ।
स्थापयित्वा यथास्थानमाराध्यस्मुखेन तु ॥१७७॥
विज्ञापयेयुर्देवस्य तत्तत्कर्माधिकारिणः ।
भोज्यासनाविरूढस्य देवस्याराधकस्स्वयम् ॥१७८॥
अर्घ्याद्यं प्राग्वदभ्यर्च्य साध्यबीजावसानकैः ।
द्वारस्याभ्यन्तरगते देवस्य पुरतः स्थले ॥१७९॥
शोधिते चास्त्रतोयेन चन्दनाद्यैश्च मण्डिते ।
मण्डले तु परिस्तीर्य तण्डुलानि यथारुचि ॥१८०॥
क्षालितं वस्त्रखण्डं तु तदूर्ध्वे सम्प्रमार्य च ।
अन्नाधारं प्रतिष्ठाप्य तदूर्ध्वे लोहनिर्मितम् ॥१८१॥
ऊर्ध्वतो वसनार्थं तन्दूर्ध्वे स्रोतसप्लुते ।
विन्यसेत्परमान्नं विशालाण्यैकैकशः क्रमात् ॥१८२॥
तर्पणं तु प्रतिष्ठाप्य हस्तप्रक्षाळनाम्भसा ।
कुर्याद्दक्षकरे देवे प्रागुपस्तरणार्हणम् ॥१८३॥
ततो देवादिमूर्तीनां हवींषि विनिवेशयेत् ।
प्रथमं पायसं पश्चात् गुळान्नं मुद्गमेदितम् ॥१८४॥
शुद्धान्नं तिलसम्मिश्रं निशान्नं दधिमिश्रितम् ।
मिश्रान्नं च क्रमाद्द्याद्पूपानि तदन्तिमे ॥१८५॥
पृथुकानि च सक्तूनि तिलपिण्डान्वितानि च ।
कदळीपनसादीनि फलानि विविधानि च ॥१८६॥
रसभेदसमेतानि पानकानि च तर्पणम् ।
नाळिकेररसं चैव हस्तप्रक्षाळनं तत ॥१८७॥

उपस्पर्शं च ताम्बूलं दत्वा प्रागुक्तमाचरेत् ।
राजभिर्हविषो नित्यं प्राचुर्ये कल्पिते सति ॥१८८॥
आधारेषु प्रतिष्ठाप्य वितते गर्भमन्दिरे ।
निवेद्यानि यथायोग मन्यथा सङ्कटे भुवि ॥१८९॥
तदेकस्मिन् दृढाधारे वस्त्रच्छन्ने यथाक्रमम् ।
निधाय विनिवेद्याथ तथा तमपनीय च ॥१९०॥
मोक्षिते चाऽस्त्रमन्त्रेण निक्षेप्यं हविरन्तरम् ।
निवेदयेद्यथापूर्वं विशेषोऽत्र समीरितः ॥१९१॥
मन्त्रक्रियाविहीनं च गन्धदुष्टं विवर्णकम् ।
अतिपक्वमपक्वं च विस्रावितजलं तथा ॥१९२॥
अदीक्षितैश्च पतितैरीक्षितं प्रतिलोमजैः ।
अत्युष्णमतिशीतं च प्रमाणरहितं तथा ॥१९३॥
समुद्धृतं च निश्शेषं मुखवातादिदूषितम् ।
व्यञ्जनादिविहीनं चाप्यपात्रस्थमगोपितम् ॥१९४॥
अन्तस्तण्डुलसंयुक्तं भिन्नभाण्डगतं तथा ।
अनाधारं परस्पृष्टं श्वसितापहृतं तथा ॥१९५॥
अङ्गारतुषसंयुक्तं केशपाषाणसंयुतम् ।
क्रिमिलोष्टादिभिर्जुष्टं प्राण्यङ्गादिसमन्वितम् ॥१९६॥
अपूर्णपाकमाधाररहितं व्यञ्जनाज्झितम् ।
गव्याज्यदधिनिर्मुक्तं कांक्षितं चेतरैर्जनैः ॥१९७॥
अपिधानविनिर्मुक्तं देवतान्तरसम्मितम् ।
एवं दुष्टं हविर्बुध्वा प्रक्षिपेज्जलमध्यतः ॥१९८॥
मोहात्पक्वं हविर्विष्णोर्यदि दद्यादवर्चनम् ।
निरर्थकं स्यात्कर्तॄणां विनाशं च भवेद्ध्रुवम् ॥१९९॥

तस्मात्तदैव मूलस्य सहस्रं जपमाचरेत् ।
ततस्तत्राश्रयाणां च स्थापितानां विधानतः ॥२००॥
विभवव्यूहमूर्तीनां मण्टपे गोपुरादिषु ।
स्थापितानां च मूर्तीनां प्रादुर्भावात्मनामपि ॥२०१॥
पूजितानां यथान्यायं सत्यादीनां खगात्मनाम् ।
कुमुदादिगणेशानां द्वारस्थानामपि सद्मनि ॥२०२॥
प्रतिष्ठितानां भक्तानां प्रागुक्तानां विधानतः ।
तत्तन्मन्त्रेण विधिवत् सिद्धानि च पृथक्पृथक् ॥२०३॥
हवींषि पायसादीनि क्रमेण विनिवेशयेत् ।
गारुडेनैव मन्त्रेण चरुयं साधयेद्धवि ॥२०४॥
अन्येषां प्रणवेनैव सिद्धमन्नं निवेदयेत् ।
अग्निकार्यहविस्साध्यं यथामूलालयाकृते ॥२०५॥
सर्वाण्यपूपभेदानि नाग्निकार्ये हितानि वै ।
अन्यानि पायसादीनि नित्यनैमित्तिकादिषु ॥२०६॥
होतव्यानि विशेषेण फलानि विविधानि च ।
भूतानां बलिदानेषु पायसादीनि नित्यशः ॥२०७॥
अपूपानि न सन्त्येव पृथुकानि फलानि च ।
तिलपिण्डममेतानि मिश्रितान्यथ वा पृथक् ॥२०८॥
दातव्यानि यथान्यायं तेषां तृप्तिकरं यतः ।
तेन क्रूरादिभिर्ब्रह्मन्नुत्सवादिषु कर्मसु ॥२०९॥
ततस्तत्रोक्तविधिना बलिद्रव्याण्युपाहरेत् ।
सामान्यं सर्ववस्तूनां सोदकं केवलोदनम् ॥२१०॥

तण्डुलं चोदकेनैव दातव्यं मन्त्रवित्तमैः।
इति सम्यक्समाख्यातं हविषा साधनादिकम् ॥२११॥
इत्येवं मुनिशार्दूला भवद्भिर्यद्यदर्थितम्।
तत्सर्वं विस्तरेणैव यथावत्प्रकटीकृतम् ॥२१२॥
सर्वोत्तमा संहितैषा सात्वतार्थप्रकाशिका।
नाख्येया दुष्टबुद्धीनामभक्तानां जनार्दने ॥२१३॥
गर्वात्सच्छास्त्रसद्वस्तुनिन्दकाना विशेषतः।
शास्त्रापकर्तृणामन्यदर्शने भावितात्मनाम् ॥२१४॥
देवसंसक्तबुद्धीनां स्वधर्मनिरतात्मनाम्।
संसारभयभीरूणां प्रपन्नानां महात्मनाम् ॥२१५॥
समाख्येयमिदं शास्त्रं दीक्षां कृत्वा यथाविधि।
शास्त्रार्थश्चानुवक्तव्यो मन्त्रार्थैश्च समन्वितः ॥२१६॥
एतच्छास्त्रोक्तविधिना योऽर्चयत्यच्युतं विभुम्।
सोऽचिराल्लभते स्वेष्टान् सर्वार्थांश्च द्विजोत्तम ॥२१७॥

*इति श्रीपाञ्चरात्रे ईश्वरसंहितायां कुण्डस्रुक्स्रुव—*
*लक्षणहविःपाकविधानं नाम*

**पञ्चविंशोऽध्यायः॥**

—O—

ईश्वरसंहिता समाप्ता

—